मास्टर मणिमालायाः १२८ संख्यको मणिः (साहित्यविभागे ५)

श्रीमदार्यशूरविरचिता—

# जातकमाला

'बाला'ऽभिधानया व्याख्यया सनाथीकृता

(साहित्यमध्यमपरीक्षायां पाठ्यत्वेन निर्धारिता)



व्याख्याता—

[illegible]बटुकनाथशास्त्री खिस्ते

साहित्याचार्यः।

—❁—

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स

मूल्यम् २।)

साहित्यमध्यमापरीक्षायां निर्द्धारिता

श्रीमदार्यशूरकृता

# जातकमाला

[ बोधिसत्त्वाऽवदानमालाऽपराख्या ]

( ३,४,८,१०,११,१२,१४,१५,१६,१९,३१ जातकानि )

काशीस्थराजकीय-संस्कृत-महाविद्यालयाध्यापकेन

साहित्याचार्येण

खरते-इत्युपाह्व पं० श्रीवटुकनाथशास्त्रिणा

विरचितया 'बाला' भिधानया टीकया संवलिता ।

सा चेयम्

काशीस्थ—'संस्कृत-बुकडिपो' ऽध्यक्षवरेण्यैः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स इत्येतैः

स्वीये 'मास्टर प्रिण्टिङ्ग वर्क्स' नाम्नि मुद्रणागारे

मुद्रापयित्वा प्रकाशिता ।

मूल्यम् २।)

❁ श्रीः ❁

# समर्पणम्

श्री वीरभद्र शिवाचार्य [illegible]

श्रीमतां विपश्चिदपश्चिमानां, साहित्यार्णवकर्णधाराणां, महनीयचरित–महाकवि–
सर्वतन्त्रस्वतन्त्र–प्रातःस्मरणीय–कैलासवासि—पूज्यपादमहामहोपाध्याय
सी० आइ० ई० श्री ६ गङ्गाधरशास्त्रितैलङ्गश्रीचरणेभ्यः
समधिगतात्मलाभानां, विविधदर्शनविमर्शननितान्तदान्ताश-
यानां, मुनिवृत्तीनां, कविकुलकुमुदाकर-राकानिशा-
नायकानां, काशीस्थराजकीयसंस्कृतमहाविद्या-
लय–प्रधानाध्यापकानां, पूज्यपादशील-श्री-
६गुरुवरश्रीभालचन्द्रशास्त्रितैलङ्ग-
श्रीचरणानां समर्हणीययोः—

## पादसरसीरुहयोः

सैषा 'बाला' ऽभिधाना जातकमालाव्याख्या
तदीयेन विनय-भरनमितशिरसाऽन्तेवासिना

### खिस्ते-बटुकनाथशास्त्रिणा

सविनयं सादरं सभक्त्युन्मेषं च उपहारीक्रियते

श्रीमतां गुरुवर्याणां करपङ्कजलालिता
प्रमोदयतु बालेयं परीक्ष्यानपि बालकान् ।
सततं मञ्जुलालापा विदां विद्यार्थिनामपि
आशिषा श्रीगुरोरेषा मनस्तोषाय जायताम् ॥

काशी इति शम् शरत्पूर्णिमा १९९७

❀ श्रीः ❀




अथेयं सम्मुद्य सुरभारतीपरिचरणपरेभ्यो विद्वद्भ्योऽन्तेवासिभ्यश्च समुपह्रियते श्रीमदार्यशूरकृतिर्बोधिसत्त्वाऽवदानमालाऽपराख्या सव्याख्या जातकमाला। अत्र च काशीस्थराजकीयसंस्कृतमहाविद्यालयीय-साहित्यमध्यमापरीक्षायां पाठ्यत्वेन निर्णीतान्येकादश जातकानि मूलपुस्तकादुद्धृत्य, 'बाला'भिधानया संक्षिप्तया व्याख्यया सनाथीकृत्य, निहितानि।

श्रीमद्भिः परममाननीयैः काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षैर्विद्वत्तल्लजैः डॉ० मङ्गलदेव शास्त्री एम्० ए०, डी० फिल्० (आक्सन्) महोदयैराज्ञप्ता मम तातपादाः (पूज्यपादश्रीदेवनारायणशास्त्रिखिस्ते-श्रीपादाः) मामेतद्व्याख्या-प्रणयने न्ययूयुजन्। तैरादिष्टश्चाहं तैरेवोपदर्शितया दिशा समासतो व्याख्यामिमां विरचय्य समपूरयम्।

अत्र मूलपुस्तकक्रमेणैतानि एकादश जातकानि ३–४, ८, १०–१२, १४–१६, १९, ३१, सन्ति। जातकमालाया मूलपुस्तकमेकमेव ईशवीये १८९१ वर्षे 'अमेरिका' देशान्तर्गत 'हार्वर्ड' विश्वविद्यालयद्वारा मुद्रितमवर्तत। परीक्षायामस्याः संनिवेशेन, तदलाभेन च खिद्यतां विद्यार्थिनां सौकर्याय अत्रत्यैः 'मास्टर खेलाडीलाल ऐण्ड सन्स' इति संस्थायाः सञ्चालकैस्तन्मुद्रणमुपक्रान्तं, टीका चेयं मदीया भावार्था-वगमाय तत्तद्विशेषज्ञानाय च न्यवेश्यत।

मूलपुस्तके भाषायाः प्राचीनतया, क्वचिद्विसंष्ठुलतया, भावानामस्फुटतया, च व्याख्यायाः नितान्तमावश्यकताऽऽसीत् । तांस्तांश्च दोषान् परिजिहीर्षुणा मया यथामति नाऽतिविस्तृता यावदर्थपदा सेयं विद्यार्थिजनोपयुक्ता व्याख्या निरमायि । क्वचित् क्वचित्तु अर्थानुरोधेन यत् पाठपरिवर्त्तनमत्यावश्यकमासीत्, तत्तथाऽक्रियत । मूले पाणिनीयानुशासनानुबन्धिन्या दृशा यत्तावदत्र क्वचित् विकलत्वं दृश्यते, तत् भाषायाः प्राचीनताकृतमिति सुधीभिरवगन्तव्यम् । तदपि मया यथामति परिहृतमेव । टीका च सेयं व्यधायि । इतः परमत्रैतद्दर्शिनो विद्यार्थिन एव गुणदोषविवेके प्रमाणम् ।

अथास्या जातकमालाया यथोपलब्धमैतिहासिकमितिवृत्तं पुरस्क्रियते—उपदेशप्रदानां प्रबन्धानां प्रणयनमपि वैदिककालादेव प्रवृत्तमिति इतिहासविदो वदन्ति, स्वोक्तौ च तास्ता उपदेशपूर्णाः वैदिकीः कथाः प्रमाणत्वेन पुरस्कुर्वते । तामेव सरणमनुसरद्भिरग्रिमैर्बौद्धैर्जैनैरपि स्वमतप्रचाराय तत्तदुपदेशगर्भाः कथाः निर्माय प्रवर्तिताः । तास्वेव बौद्धानां 'अवदानशतकं' 'दिव्यावदानमाला' च प्रसिद्धे । एतदेव ग्रन्थद्वयं प्रायोऽन्येषां जातकग्रन्थानां मूलभूतं, तत्रत्या एव च कथास्तेष्ववलोक्यन्ते । एषु च ग्रन्थेषु बोधिसत्त्वस्य लोकोपकारविषयिण्यः कथाः सन्ति । तत्र मातृचेटविरचितस्य 'अवदानशतक'स्य 'चीन' देशभाषायामनुवादः ईसवीयतृतीयशताब्द्याः पूर्वभागे जात इति श्रूयते । 'दिव्यावदानमाला' च ईसवीये २६५ तमे वर्षे 'चीन' भाषायामनूदिताऽभूत् । 'अवदानशतक' कर्तुर्मातृचेटस्य समयश्च द्वितीया खीस्तीयशताब्दी ।

प्रस्तुता चेयं जातकमाला पञ्चतन्त्रादिवत् उपदेशप्रधानकथावस्तुघटितः प्रबन्धो वर्तते । चम्पूकाव्यवदत्राऽपि रचनासरणिर्गद्य-पद्यमयी जागर्ति । किन्तु उपदेशप्राधान्येन चम्पूकाव्यात्पार्थक्येन कथास्वेवेयं परिगण्यते विद्भिः । काव्यानुशासनदृशा तु अत्रत्या भाषासरणिः सरसा सरला मनोहारिणी च समवलोक्यते, तावता

च साहित्यसाम्राज्ये नाऽस्याः स्थानं न्यूनतरं भवेत्। गद्येऽपि क्वचित् दीर्घसमास-प्रगुणा रचना साऽलङ्कारा भणितिश्च चेतो हरत्येव। अत्र सर्वा अपि कथाः भगवतो बोधिसत्त्वस्य तेषु तेषु जन्मान्तरेषु तं तं लोकोपकारवृत्तान्तं श्रावयन्ति। समुपदिशन्ति च मानवान् विशेषतो बालकान् सत्कर्मणां विविधविचित्रफलवर्णन-मुखेन सदाचारशीलताम्। तावता चाऽस्या उपादेयता निर्विवादमभ्युपगन्तुं शक्यते सुधीभिः। अत्रोपात्ताः कथाः प्रायेण सर्वा अपि 'पाली' भाषामयेभ्य 'पिटक' ग्रन्थेभ्यो 'जातक' ग्रन्थेभ्यश्च सङ्गृह्य संस्कृतभाषायां श्रीमता विद्वद्वरेणा-ऽऽर्यशूरेण निबद्धाः सन्ति। केवलं अत्रत्यं प्रथमं 'व्याघ्रीजातकं' प्राचीनेषु जातक-निबन्धेषु नोपलभ्यते।

अत्र च 'हीनयान'-'महायान'योर्द्वयोरपि सौगतसम्प्रदाययोर्वर्णनमुपलभ्यते। प्राचीनजातके केवलं 'हीनयान' ग्रन्था एव क्वचित् क्वचिदुल्लिखिता दृश्यन्ते। अस्या जातकमालायाः 'चीन' भाषायामनुवादः ४३४ ईसवीयाब्दे लिखितो लभ्यते, तेनैतद्रचयितुः श्रीमदार्यशूरस्य समयस्तृतीया खीस्तीयशताब्दी निर्णीयते विपश्चिद्भिः। ६७१—६९४ खीस्ताब्दयोर्मध्ये भारतवर्षे भ्रमता चीनदेशीयेन यात्रिणा 'इत्सिंग' नाम्ना इदमुदीर्यते—तदा बौद्धानामियं जातकमालाऽतिप्रियाऽऽसीत्, भूयांश्चास्याः बभूव पठनादिप्रचारः इति। 'अजन्ता'-स्थासु शिलासु अत्रत्यानां पद्यानां कथाचित्राणां च दर्शनात् तल्लेखनकाले अस्याः प्रचारो भूयानाऽऽसीदिति-नुमातुं सुशकमेव। एतद्रचनायां महाकवेरश्वघोषस्यानुकृतिर्लेखकेन विहिता, 'कुमारलात' नाम्नो निबन्धस्याऽप्यत्रानुकरणमस्तीत्यैतिह्यविदो वदन्ति। स एष जातकमालाया वृत्तान्तः। एवमियं जातकमाला यथामति संशोध्य, टीकया विश-दीकृत्य च सुरभारतीरसिकानामविकरकमलमस्माभिः समर्प्यते। मुद्रणे यास्तथा याः काश्चिदशुद्धयो भवेयुस्ता गुणैकपक्षपातिभिः श्रीमद्भिर्विद्वद्भिः संशोध्य पठनीया इति प्रार्थये। एतस्याः समादरणेन मदीयमिमं परिश्रम गात्राणवा गासे। सा-

श्छात्रा अध्यापकमहोदयाश्च सफलयेयुरिति साम्ब शिवं प्रार्थयमानो विर मति विस्तरात् ।

शरत्पूर्णिमा
१९९७
घासीटोला, काशी ।

विदुषां विधेयः—
बटुकनाथशास्त्री खिस्ते ।

## द्वितीयसंस्करण-प्रकाशनावसरे
# निवेदनम्

परमेशकृपया 'जातकमालायाः' द्वितीयमिदं संस्करणं विदुषां पुरस्तादुपस्थाप्यते । अस्मिन् संस्करणे यथामति पूर्वं विद्यमानानां कासाञ्चिदशुद्धीनां शोधनं, प्रश्न-पत्राणां संयोजनमित्यादि परिवर्तन-परिवर्धनादिकं विहितमस्ति । तेन च विदुषां विद्यार्थिनाञ्च परितोषः स्यादित्याशास्ते ।

दूधविनायक,
काशी ।

विदुषामनुचरः—
बटुकनाथशास्त्री खिस्ते ।

—o—

॥ श्रीः ॥

श्रीमदार्यशूरविरचिता

# जातकमाला

## कुल्माषपिण्डीजातकम्



चित्तप्रसादोद्गतं पात्रातिशयप्रतिपादितं च नाल्पकं नाम दानमस्ति विपाकमहत्त्वात् । तद्यथानुश्रूयते । बोधिसत्त्वभूतः किलायं भगवान्कोशलाधिपतिर्बभूव । तस्योत्साहमन्त्रप्रभुशक्तिसम्पत्प्रभृतीनां प्रकर्षिणामपि राजगुणानां विभूतिमतिशिश्ये दैवसम्पद्गुणशोभा ।

वन्दारुमन्दारममन्दमोदनिष्यन्दसान्द्रं घृतबालचन्द्रम् ।
तुन्दोन्नतं मन्दितविघ्नवृन्दं गिरीन्द्रजानन्दनमाश्रयामि ॥

चित्तप्रसादोद्गतमिति । अयं भावः—प्रसन्नेन चेतसा दीयमानं सत्पात्रे प्रतिपादितं लघ्वपि दानं महते फलाय कल्पते, यथाऽस्मिन्नेव जातके कुल्माषपिण्डी ( 'कुल्फा' इति प्रसिद्धा ) दानं राज्यलाभाय कारणमभूदिति । विपाकमहत्वात् । विपाकः परिणामः तस्य महत्वात् परिणाममाहात्म्यात् इत्यर्थः । बोधिसत्वभूत इति । भगवान् श्रीबुद्धः कदाचित् कोशलाधिपतिवपुषा भुवमवततारेत्यर्थः । उत्साहेति । 'षड्गुणाः शक्तयः तिस्रः' इत्यादौ प्रसिद्धाः प्रभावोत्साहमन्त्रजाः शक्तयः, सम्पत् ऐश्वर्यम् एतत्प्रभृतीनां प्रकर्षिणां प्रकर्षशालिनाम् । राजगुणानां विभूतिं दैवसम्पद्गुणशोभाऽतिशिश्य इत्यन्वयः । दैवी या सम्पत् जातिस्मरत्वतेजोविशेषवत्त्वादिरूपा तदुद्भवा ये गुणास्तेषां शोभा ।

गुणास्तस्याधिकं रेजुर्दैवसम्पद्विभूषणाः ।
किरणा इव चन्द्रस्य शरदुन्मीलितश्रियः ॥ १ ॥

रथतुरगविचित्रं मत्तनागेन्द्रनीलं
बलमकृशमिदं मे मेदिनी केवला च ।
बहुधनमनुरक्ता श्रीरुदाराश्च दाराः
फलसमुदयशोभां पश्य कुल्माषपिण्ड्याः ॥ ५ ॥

रथतुरगेति । रथतुरगविचित्रं मत्तनागेन्द्रनीलं अकृशमिदं बलं मे ( अस्ति ) केवला मेदिनी च ( वर्तते ) बहुधनं, अनुरक्ता श्रीः, ( अस्ति ) उदारा दाराश्च ( सन्ति ) कुल्माषपिण्ड्याः फलसमुदयशोभां पश्य इत्यन्वयः ।

रथैः स्यन्दनैस्तुरगैरश्वैश्च विचित्रं बहुप्रकारं, मत्तनागेन्द्रैर्मत्तगजैर्नीलं नीलवर्णं भासमानं गजानां बाहुल्यात् नीलवर्णं भासमानमित्यर्थः । अकृशं = विपुलं इदं बलं = सैन्यं मे मम अस्तीति शेषः । एवमग्रेऽपि । केवला मेदिनी च सकला पृथ्वी वशे वर्तत इति भावः । बहुधनं, अनुरक्ता स्थिरा श्रीर्लक्ष्मीर्वर्तते । उदाराः सत्कुलजाः गुणवन्तः दाराः = स्त्रियश्च सन्ति । कुल्माषपिण्ड्याः फलसमुदयशोभां = फलोदयशोभां पश्य = अवलोकय । कुल्माषपिण्डीदानस्यैव एतावान् महिमा इति भावः ॥ ५ ॥

तममात्या ब्राह्मणवृद्धाः पौरमुख्याश्च कौतूहलाघूर्णितमनसोऽपि न प्रसहन्ते स्म पर्यनुयोक्तुं किमभिसमीक्ष्य महाराजो गाथाद्वयमिदमभीक्ष्णं भाषत इति । अथ तस्य राज्ञो वाग्नित्यत्वादव्याहततरप्रणयप्रसरा देवी समुत्पन्नकौतूहला संकथाप्रस्तावागतं पर्षदि पर्यपृच्छदेनम् ।

पौरमुख्याः = प्रमुखा नागरिकाः । कौतूहलाघूर्णितमनसः = कौतूहलेन आघूर्णितमाकुलीकृतं मनो येषां ते तथाविधाः । न प्रसहन्ते स्म = न प्रवर्तन्ते स्म । पर्यनुयोक्तुं = प्रष्टुम् । वाग्नित्यत्वात् = वाचः श्लोकद्वयरूपाया नित्यत्वात् नित्यमुच्चारणात् । संकथाप्रस्तावागतम् = संकथा वार्तालापः तस्य प्रस्तावे प्रसङ्गे आगतं व्यासक्तम् ।

नियतमिति नरेन्द्र ! भाषसे हृदयगतां मुदमुद्गिरन्निव ।
भवति मम कुतूहलाकुलं हृदयमिदं कथितेन तेन ते ॥ ६ ॥

नियतमिति । हे नरेन्द्र ! हृदयगतां मुदं उद्गिरन्निव इति यन्नियतं भाषसे, तेन ते कथितेन इदं मम हृदयं कुतूहलाकुलं भवति इत्यन्वयः ।

अयं भावः । हे राजन् ! प्रत्यहं सहर्षं यदेतद् गाथायुगलं पठसि तेन कौतूहलं मे भवतीति । अपरवक्त्रं नामच्छन्दः ॥ ६ ॥

तदर्हति श्रोतुमयं जनो यदि प्रचक्ष्व तत्किं न्विति भाषसे नृप ! ।
रहस्यमेवं च न कीर्त्यते क्वचित्प्रकाशमस्माच्च मयाऽपि पृच्छयते ॥ ७ ॥

तदर्हतीति । तद् यदि अयं जनः श्रोतुमर्हति (तर्हि) हे नृप ! किंनु इति भाषसे तत् प्रचक्ष्व । (यतः) रहस्यं च एवं क्वचित् न कीर्त्यते, अस्मात् च मयाऽपि प्रकाशं पृच्छयते इत्यन्वयः ।

तत् तस्माद् हेतोः 'यत्तद् यतस्ततो हेतौ' इति कोषः । यदि अयं जनः (अहं) श्रोतुमर्हति (तर्हि) हे नृप ! राजन् ! किं नु इति पूर्वोक्तं भाषसे अनवरतं पठसि तत् प्रचक्ष्व कथय । यतः रहस्यं च गोप्यं वस्तु तु एवं क्वचिन्न कीर्त्यते न गीयते । अस्माद् हेतोश्च रहस्याऽभावात् मयाऽपि प्रकाशं सर्वजनसमक्षं पृच्छयते । वंशस्थवृत्तम् ॥ ७ ॥

अथ स राजा प्रीत्यभिस्निग्धया दृष्टया समभिवीक्ष्य देवीं स्मित-प्रविकसितवदन उवाच ।

प्रीत्यभिस्निग्धया = प्रीत्या प्रेम्णा अभिस्निग्धा कोमलतरा तया ।

अविभाव्य निमित्तार्थं श्रुत्वोद्गारमिमं मम ।
न केवलं तवैवात्र कौतूहलचलं मनः ॥ ८ ॥

अविभाव्येति । इमं ममोद्गारं श्रुत्वा निमित्तार्थं च अविभाव्य, केवलं तवैव अत्र मनः कौतूहलचलं न इत्यन्वयः ।

इमं ममोद्गारं = उक्तिं श्रुत्वा, निमित्तभूतस्तादृगुक्तौ कारणीभूतो योऽर्थस्तं च अविभाव्य = अविज्ञाय केवलं तवैवाऽत्र = पर्षदि मनः कौतूहलचलं न किंतु सर्वेषामपीति भावः ॥ ८ ॥

तदेवाह—

समन्तमप्येतदमात्यमण्डलं कुतूहलाघूर्णितलोलमानसम् ।
पुरं च सान्तःपुरमत्र तेन मे निशम्यतां येन मयैवमुच्यते ॥ ९ ॥

समन्तमिति—समस्तं एतदमात्यमण्डलं, मे सान्तःपुरं पुरमपि च अत्र

कुतूहलाघूर्णितलोलमानसम् (वर्तते) । तेन निशम्यतां येन मया एवमुच्यते इत्यन्वयः ।

समस्तं सर्वं एतत्पुरोवर्ति अमात्यमण्डलं = सचिवसमुदायः । अत्र समन्तं इत्यपि पाठः । मे मम सान्तःपुरं अन्तःपुरेण अवरोधजनेन सहितं पुरं नगरं अपि च सर्वे पौराश्चेति भावः । अत्र अस्मिन् विषये कुतूहलेन कौतुकेन जिज्ञासया आघूर्णितं आकुलितं अत एव लोलं चञ्चलं मानसं यस्य तथाविधं वर्तत इति शेषः । 'लोलश्चल-सतृष्णयो' रिति कोषः । तेन हेतुना सर्वेषां कौतूहलनिवृत्तय इति भावः । निशम्यतां = आकर्ण्यताम् । येन = येन कारणेन मया एवं गाथाद्वयं उच्यते पठ्यते । तत्कारणीभूतो वृत्तान्तो निशम्यतामिति भावः ॥ ९ ॥

सुप्तप्रबुद्ध इव जातिमनुस्मरामि
यस्यामिहैव नगरे भृतकोऽहमासम् ।
शीलान्वितोऽपि धनमात्रसमुच्छ्रितेभ्यः
कर्माभिराधनसमर्जितदीनवृत्तिः ॥१०॥

सुप्तप्रबुद्ध इति—सुप्तप्रबुद्ध इव (अहं) जातिमनुस्मरामि, यस्यां इहैव नगरे शीलान्वितोऽपि धनमात्रसमुच्छ्रितेभ्यः कर्माभिराधनसमर्जितदीनवृत्तिः भृतकोऽहमासम् इत्यन्वयः ।

सुप्तप्रबुद्धः = स्वप्नोत्थित इव अहं जातिं = पूर्वजन्मवृत्तान्तमनुस्मरामि आकलयामि, यस्यां जातौ जन्मनीत्यर्थः, इहैव नगरेऽस्मिन्नेव पुरे शीलेन सुचरितेनाऽन्वितोऽपि सुचरितोऽपि दारिद्र्याद् हेतोः धनमात्रेण वैभवमात्रेण समुच्छ्रितेभ्यः समुन्नतेभ्यो गर्वितेभ्य इत्यर्थः । धनिकेभ्यो जनेभ्य इति यावत् । तत्सकाशात् कर्मणा सेवादिरूपेण यत् अभिराधनमाराधनं तेन समर्जिता दीनाऽत्यल्पाऽदरिद्रोचिता वृत्तिर्जीवननिर्वाहसामग्री येन तथाविधः भृतको भृत्यः अहमासम् । वसन्ततिलकावृत्तम् ॥१०॥

सोऽहं भृतिं परिभवश्रमदैन्यशालां
त्राणाशयात्स्वयमवृत्तिभयाद्विविक्षुः ।
भिक्षार्थिनश्च चतुरः श्रमणानपश्य
वश्येन्द्रियाननुगतानिव भिक्षुलक्ष्म्या ॥११॥

सोऽहमिति— सोऽहं परिभवश्रमदैन्यशालां भृतिं अवृत्तिभयात् त्राणाशया स्वयं विविक्षुः ( कदाचित् ) भिक्षुलक्ष्म्याऽनुगतानिव वश्येन्द्रियान् भिक्षार्थिनश्च चतुरः श्रमणान् अपश्यम् इत्यन्वयः ।

सोऽहं कर्मकरावस्थायां परिभवः पराभवस्तिरस्कारः, श्रमः क्लेशः, दैन्यं दारिद्र्यं, एतेषां शालां वासभूमिं भृतिं = सेवावृत्तिं, अवृत्तिभयात् = वृत्त्यन्तराऽलाभजनितभयात् त्राणाशया = आत्मनो रक्षणाशया । 'त्राणाशयात्' इति मूलपुस्तके वर्तमानः पाठो न योग्यः प्रतिभाति । स्वयं विविक्षुः = स्वयं प्रवेष्टुमिच्छन् , कदाचित् नियतं दैनन्दिनं स्वकर्म कर्तुं गच्छन् इत्यर्थः । भिक्षूणां लक्ष्म्या श्रिया शोभयेत्यर्थः, अनुगतानिव अनुयातान् इव वश्येन्द्रियान् = जितेन्द्रियान् भिक्षार्थिनश्च = भैक्ष्यलाभाय भ्रमतश्च चतुरः चतुःसंख्याकान् श्रमणान् = बौद्धभिक्षून् , अपश्यं = अवालोकयम् ॥११॥

तेभ्यः प्रसादमृदुना मनसा प्रणम्य कुल्माषमात्रकमदां प्रयतः स्वगेहे ।
तस्याङ्कुरोदय इवैष यदन्यराजचूडाप्रभाश्चरणरेणुषु मे निषक्ताः ॥१२॥

तेभ्य इति । प्रयतः सन् अहं स्वगेहे प्रसादमृदुना मनसा तेभ्यः प्रणम्य, कुल्माषमात्रकं अदाम् , तस्य एष अङ्कुरोदय इव ( अस्ति ) यत् अन्यराजचूडाप्रभाः मे चरणरेणुषु निषक्ताः ( सन्ति ) इत्यन्वयः ।

प्रयतः तत्परः सन् अहं स्वगेहे स्वगृहे प्रसादमृदुना = प्रसादकोमलेन प्रसन्नेन इत्यर्थः । मनसा चेतसा तेभ्यः प्रणम्य तेभ्यो नमस्कृत्य, कुल्माषमात्रकं कुल्माषमात्रमेव कुल्माषमात्रकं भैक्ष्यं अदां प्रायच्छम् । तस्य कुल्माषदानस्य एष अयं खलु अङ्कुरोदय इव अङ्कुरारम्भ इव दृश्यत इति शेषः । कोऽसौ इत्याह—यत् अन्येषां राज्ञां सामन्तानां चूडाप्रभाः मस्तकस्थरत्नकान्तयः मे मम चरणरेणुषु पदधूलिषु निषक्ताः पतिता सन्ति इति शेषः । अयं भावः—कुल्माषपिण्डीदानस्यैव एतत्फलं यदद्य सकलभूपालचक्रवर्ती अहं जात इति ॥ १२ ॥

तदेतदभिसन्धाय मयैवं देवि ! कथ्यते ।
पुण्येन च लभे तृप्तिमर्हतां दर्शनेन च ॥ १३ ॥

तदेतदिति । अयं भावः—तदेवं कुल्माषमात्रदानमहिमानं विचिन्त्य मया

गाथायुगलं पठ्यते। पुण्येन कर्मणा, महतां सत्पुरुषाणां दर्शनादिना च सन्तोषमनुभवामि इति ॥ १३ ॥

अथ सा देवी प्रहर्षविस्मयविशालाक्षी सबहुमानमुदीक्षमाणा राजानमित्युवाच। उपपन्नरूपः पुण्यानामयमेवंविधो विपाकाभ्युदयविशेषः। पुण्यफलप्रत्यक्षिणश्च महाराजस्य यदयं पुण्येष्वादरः। तदेवमेव पापप्रवृत्तिविमुखः पितेव प्रजानां सम्यक्परिपालनसुमुखः पुण्यगणार्जनाभिमुखः।

उपपन्नरूपः = युक्ततमः पुण्यानां = पुण्यशालिनां, विपाकाभ्युदयविशेषः = परिणामे अभ्युदयातिशय इत्यर्थः।

पुण्यफलप्रत्यक्षिणः = पुण्यफलदर्शिनः। पुण्यगणार्जनाभिमुखः = पुण्यगणस्य पुण्यसमुदायस्य अर्जने संग्रहे अभिमुखः तत्परः।

यशःश्रिया दानसमृद्धया ज्वलन्प्रतिष्ठिताज्ञः प्रतिराजमूर्धसु।
समीरणाकुञ्चितसागराम्बरां चिरं महीं धर्मनयेन पालय ॥ १४ ॥

यशःश्रियेति। दानसमृद्धया यशःश्रिया ज्वलन्, प्रतिराजमूर्धसु प्रतिष्ठिताज्ञः (त्वं) समीरणाकुञ्चितसागराम्बरां महीं धर्मनयेन चिरं पालय इत्यन्वयः।

दानेन समृद्धया वृद्धिं गतया यशःश्रिया कीर्तिशोभया ज्वलन् उज्ज्वलश्रीः, प्रतिराजानां शत्रुभूपानां मूर्धसु मस्तकेषु प्रतिष्ठिताज्ञः निवेशितशासनः। प्रतिभूपालमौलिलालिताज्ञ इत्यर्थः। तथाविधः सन् त्वं समीरणेन वायुना आकुञ्चितं आकम्पितं सागरः समुद्र एव अम्बरं वस्त्रं यस्यास्तां महीं पृथ्वीं कामिनीमिवेति प्रतीयते। धर्मनयेन = धर्मयुक्तेन नयेन नीत्या चिरं बहुकालं पालय। वंशस्थवृत्तम् ॥१४॥

राजोवाच। किं ह्येतद्देवि! न स्यात्।

सोऽहं तमेव 'पुनराश्रयितुं यतिष्ये
श्रेयःपथं समभिलक्षितरम्यचिह्नम्'।
लोकः प्रदित्सति हि दानफलं निशम्य
दास्याम्यहं किमिति नात्मगतं निशम्य ॥१५॥

सोऽहमिति। सोऽहं समभिलक्षितरम्यचिह्नं तमेव श्रेयःपथं पुनराश्रयितुं

यतिष्ये, हि लोकः दानफलं निशम्य प्रदित्सति, अहं आत्मगतं निशम्य किमिति न दास्यामि इत्यन्वयः ।

सोऽहं समभिलक्षितं अनुभवगोचरीकृतं रम्यं चिह्नं राज्यलाभादिरूपं यस्य तं तमेव दातृत्वादिरूपं श्रेयःपथं कल्याणमार्गं पुनः आश्रयितुं आचरितुं अस्मिन्नपि जन्मनि यतिष्ये प्रयतिष्ये । हि यतः लोकः जनः कथासु दानफलं दानजनितमुत्तमं परिणामं निशम्य श्रुत्वाऽपि प्रदित्सति प्रकर्षेण दातुमिच्छति भूयो दानादिकमाचरति, अहं पुनः आत्मगतं निशम्य स्ववृत्तान्तमनुस्मरन्नपि किमिति किमर्थं न दास्यामि अपितु अनुभूतदानपरिणामस्य मे दानप्रवृत्तिरुचिता भविष्यत्येवेति भावः ॥१५॥

अथ स राजा देवीं देवीमिव श्रिया ज्वलन्तीमभिस्निग्धमवेक्ष्य श्रीसम्पत्तिहेतुकुतूहलहृदयः पुनरुवाच—

देवीं = महिषीं श्रिया = कान्त्या ज्वलन्तीं उज्ज्वलां देवीमिव दिव्यस्त्रिय-मिवेत्यन्वयः ।

श्रीः = कान्तिः सम्पत्तिरैश्वर्यं तत्प्राप्तौ इत्यर्थः । हेतुः कारणं तत्र कुतूहलं हृदये यस्य सः । देव्या अपि सम्पद्विगमे हेतुं जिज्ञासमान इत्यर्थः ।

चन्द्रलेखेव ताराणां स्त्रीणां मध्ये विराजसे ।
अकृथाः किं नु कल्याणि ! कर्मातिमधुरोदयम् ॥१६॥

चन्द्रलेखेवेति । ताराणां मध्ये चन्द्रलेखेव स्त्रीणां मध्ये विराजसे, हे कल्याणि ! किंनु अतिमधुरोदयं कर्म अकृथाः ? इत्यन्वयः ।

अयं भावः—उडुगणमध्ये चन्द्रकलेव त्वं स्त्रीसमाजे शिरोमणिभूता विराजसे, हे कल्याणगुणशालिनि ! किंनु अतिमधुरः उदयः परिपाको यस्य तथाविधं कर्म सत्कर्म अकृथाः कृतवत्यसीति प्रश्नः ॥१६॥

देव्युवाच—अस्ति देव किञ्चिदहमपि पूर्वजन्मवृत्तिं समनुस्मरामीति । कथय कथयेदानीमिति च सादरं राज्ञा पर्यनुयुक्तोवाच—

अस्तीति किंचित्—तथाविधं सुकृतमित्यर्थः । पर्यनुयुक्ता = पृष्टा ।

बाल्येऽनुभूतमिव तत्समनुस्मरामि दासी सती यदहमुद्धृतभक्तमेकम् ।
क्षीणास्रवाय मुनये विनयेन दत्त्वा सुप्तेव तत्र समवापमिह प्रबोधम् ॥१७॥

बाल्य इति। तत् बाल्ये अनुभूतमिव समनुस्मरामि, यत् अहं दासी सती एकमुद्धृतभक्तं क्षीणास्रवाय मुनये विनयेन दत्वा, तत्र सुप्तेव इह प्रबोधं समवापम् इत्यन्वयः।

तत् पूर्वजन्मवृत्तं बाल्ये बालकाले अनुभूतमिव सम्प्रत्यपि सुस्पष्टमनुस्मरामि। किं तदित्याह—यत् अहं दासी सती कुत्राऽपि सेवावृत्तिं विदधाना एकमुद्धृतभक्तं परिपक्वं सद्यः चुल्या अवरोपितं ओदनं, क्षीणः आस्रवः क्लेशः कर्मफलरूपो यस्य तस्मै जीवन्मुक्ताय इत्यर्थः। 'आदीनवास्रवौ क्लेशे' इत्यमरः। मुनये यतये विनयेन नम्रतया दत्वाऽर्पयित्वा, तत्र तस्मिन् जन्मनि सुप्तेव निद्रितेव विस्मृतदेहत्यागेति यावत् इह अस्मिन् जन्मनि प्रबोधं ज्ञानं समवापं, प्राप्तवत्यस्मि ॥१७॥

एतत्स्मरामि कुशलं नरदेव! येन त्वन्नाथतामुपगतास्मि समं पृथिव्या।
क्षीणास्रवेषु न कृतं तनु नाम किञ्चिदित्युक्तवानसि यथैव मुनिस्तथैव ॥१८॥

एतदिति—हे नरदेव! एतत् कुशलं स्मरामि येन पृथिव्या समं त्वन्नाथतामुपगताऽस्मि, क्षीणाऽऽस्रवेषु कृतं किञ्चिदपि तनु नाम न भवतीति यथा त्वं उक्तवानसि, तथैव मुनिः (पुराऽवोचत्) इत्यन्वयः।

अयं भावः--हे राजन्! एतदेव मे कुशलं (सुकृतं) वर्तते, येनाऽहं पृथिव्याः सपत्नी सती त्वादृशं स्वामिनं समवापम्, क्षीणक्लेशेषु मुनिषु विहितमत्यल्पकमपि सुकृतं भूयसे फलाय कल्पते, एतदेव त्वयाऽधुना मुनिना च पूर्वमुक्तम् इति ॥१८॥

अथ स राजा पुण्यफलप्रदर्शनात्पुण्येषु समुत्पादितबहुमानामभिप्रसन्नमनसं पर्षदं विस्मयैकाग्रामवेत्य नियतमीदृशं किञ्चित्समनुशशास।

पुण्येषु = पुण्यकृत्येषु दानादिषु। नियतमीदृशं = नियमेनैतादृशं समनुशशास = शासनं प्रवर्तयामास।

अल्पस्यापि शुभस्य विस्तरमिमं दृष्ट्वा विपाकश्रियः
स्यात्को नाम न दानशीलविधिना पुण्यक्रियातत्परः।
नैव द्रष्टुमपि क्षमः स पुरुषः पर्याप्तवित्तोऽपि सन्-
यः कार्पण्यतमिस्रयावृतमतिर्नाप्नोति दानैर्यशः ॥१९॥

अल्पस्येति। विपाकश्रियः अल्पस्याऽपि शुभस्य इमं विस्तरं दृष्ट्वा को नाम दानशीलविधिना पुण्यक्रियातत्परो न स्यात्? स पुरुषः द्रष्टुमपि नैव क्षमः यः पर्याप्तवित्तोऽपि सन् कार्पण्यतमिस्रयाऽऽवृतमतिः दानैर्यशो नाप्नोति इत्यन्वयः।

अयं भावः—परिणामे अल्पस्याऽपि सुकृतस्य महत् फलमभि समीक्ष्य को नाम पुरुषः दानादिभिः पुण्यं न अर्जयेत्। यः सम्पन्नोऽपि बद्धमुष्टिः सन् दानं नाऽऽचरति तस्य मुखावलोकनमपि कर्तुमनर्हमिति। कार्पण्यं कृपणता सैव तमिस्रा रात्रिः, तमिस्राशब्देनाऽन्धकारो लक्ष्यते। तया आवृता आच्छादिता मलिनेति यावत् मतिर्बुद्धिर्यस्य सः तथाविधः ॥१९॥

त्यक्तव्यं विवशेन यन्न च तथा कस्मैचिदर्थाय यत्
तन्न्यायेन धनं त्यजन्यदि गुणं कश्चित्समुद्भावयेत्।
कोऽसौ तत्र भजेत मत्सरपथं जानन्गुणानां रसं
प्रीत्याद्या विविधाश्च कीर्त्यनुसृता दानप्रतिष्ठागुणाः ॥२०॥

त्यक्तव्यमिति। यत् विवशेन त्यक्तव्यं यच्च न तथा कस्मैचिदर्थाय (भवति) तद्धनं यदि न्यायेन त्यजन् कश्चिद् गुणं समुद्भावयेत्। तत्र गुणानां रसं जानन् असौ कः (यः) मत्सरपथं भजेत? प्रीत्याद्याश्च विविधाः कीर्त्यनुसृता गुणाः दानप्रतिष्ठाः (खलु) इत्यन्वयः।

अत्रेदं तात्पर्यम्—यत् खलु धनं सर्वदा त्याज्यमेव वर्तते, श्रूयते च 'दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य' इति। यच्च कस्मैचिदपि आमुष्मिकफलाय (पारलौकिकफलाय) उपभुक्तं सत् न प्रभवति। तद्धनं सुकृती जनः याचकेभ्यो वितरन् यदि स्वकीयां गुणवत्तां प्रदर्शयेत् तर्हि तथाविधः कोऽपि सज्जना नाऽस्ति यस्तं दृष्ट्वा मात्सर्यं भजेत, सर्वोऽपि जनः तं साधुवादैः प्रशंसत्येव, जनानुरागप्रमुखाः यशसाऽनुसृता गुणाश्च दान एव वसन्ति। ततः सर्वथा सुकृतिभिर्दानपरैर्भाव्यमिति ॥२०॥

दानं नाम महानिधानमतुलं चौराद्यसाधारणं
दानं मत्सरलोभदोषरजसः प्रक्षालनं चेतसः।
संसाराध्वपरिश्रमापनयनं दानं सुखं वाहनं
दानं नैकसुखोपधानसुमुखं सन्मित्रमात्यन्तिकम् ॥२१॥

दानमिति। दानं नाम अनुगं चौराद्यसाधारणं महानिधानं, दानं मत्सर-लोभदोषरजसः चेतसः प्रक्षालनं, संसाराध्वपरिश्रमापनयनं दानं सुखं वाहनं, नैकसुखोपधानसुमुखं दानं आत्यन्तिकं सन्मित्रं (अस्ति) इत्यन्वयः।

दानमहिमानं भूयोऽपि वर्णयति—दानं नामेति सर्वत्र सम्भावनायाम्। अनुगं=अनुगच्छतीत्यनुगं परलोकोपयोगि अविनश्वरमित्यर्थः। चौराद्यसाधारणं=चौरैरपहर्तुमशक्यम्। महानिधानं=महानिधिर्द्रव्यराशिरस्तीति शेषः। दानं मत्सरः मात्सर्यं असूयेत्यर्थः लोभश्च ताभ्यां जनितो यो दोषः मालिन्यं तदेव रजो वर्तते यस्य तस्य चेतसः प्रक्षालनं=विमलीकरणं तत्साधनमित्यर्थः। संसाराध्वपरिश्रमापनयनं=संसारमार्गखेदनिवारणसाधनं दानं सुखं=सुखकरं वाहनं=उह्यते अनेन इति वाहनं सुखसाधनमिति यावत्। नैकेषां बहुविधानां सुखानां यद् उपधानं आहरणं तेन सुमुखं सुखावहं दानं आत्यन्तिकं सार्वदिकं सन्मित्रं मित्रवदुपकारि अस्तीति शेषः ॥२१॥

विभवसमुदयं वा दीप्तमाज्ञागुणं वा
त्रिदशपुरनिवासं रूपशोभागुणं वा।
यदभिलषति सर्वं तत्समाप्नोति दाना-
दिति परिगणितार्थः को न दानानि दद्यात् ॥२२॥

विभवसमुदयमिति। विभवसमुदयं वा दीप्तं आज्ञागुणं वा त्रिदशपुरनिवासं रूपशोभागुणं वा यदभिलषति तत्सर्वं दानात् समाप्नोति इति परिगणितार्थः कः दानानि न दद्यात्? इत्यन्वयः।

विभवसमुदयं=ऐश्वर्यलाभं वा दीप्तं उज्ज्वलं आज्ञागुणं=प्रभुशक्तिं वा, त्रिदशपुरनिवासं=स्वर्गलोकनिवासं वा रूपशोभा शरीरसौन्दर्यं तदेव गुणः तं वा (जनः) यत् अभिलषति वाञ्छति तत् सर्वं दानादेव समाप्नोति इति परिगणितार्थः इत्येवं कृतविचारः कः दानानि न दद्यात्? दानस्य सकलकल्याणहेतुत्वं विचार्य को नाम दानपरो न भवेत्? इत्यर्थः ॥२२॥

सारादानं दानमाहुर्धनानामैश्वर्याणां दानमाहुर्निदानम्।
दानं श्रीमत्सज्जनत्वावदानं बाल्यप्रज्ञैः पांसुदानं सुदानम् ॥२३॥

सारादानमिति। दानं धनानां सारादानं आहुः, ऐश्वर्याणां दानं निदानमाहुः,

दानं श्रीमत्सज्जनत्वाऽदानं, बाल्यप्रज्ञैः ( कृतं ) पांसुदानं ( अपि ) सुदानं ( भवति ) इत्यन्वयः ।

दानं धनानां सारादानं = सर्वविधं धनसम्प्राप्तिसाधनं आहुः मुनय इति शेषः । ऐश्वर्याणां = वैभवानां दानं निदानं आदिकारणमाहुः । 'निदानं त्वादिकारणं' इत्यमरः । दानं श्रीमतः धनिकस्य पुरुषस्य सज्जनत्वस्य साधुताया अवदानं प्रख्यापकमित्यर्थः । 'अवदानं कर्मवृत्त' मिति कोषः । बालप्रज्ञैः अल्पप्रज्ञैः कृतं मूर्खैः बालकादिभिर्वा विहितं पांसुदानं धूलिदानं ( मृत्पात्रदानं वा ) अपि सुदानं भवति फलाय कल्पते । शालिनी छन्दः ॥२३॥

अथ सा पर्षत्तस्य राज्ञस्तद्ग्राहकं वचनं सबहुमानमभिनन्द्य प्रदानादिप्रतिपत्त्यभिमुखी बभूव । तदेवं चित्तप्रसादोद्गतं पात्रातिशयप्रतिपादितं च नाल्पकं नाम दानमस्ति विपाकमहत्त्वादिति प्रसन्नचित्तेनानुत्तरे पुण्यक्षेत्र आर्यसंघे दानं ददता परा प्रीतिरुत्पादयितव्या । अदूरे समाप्येवंविधा अतो विशिष्टतराश्च सम्पत्तय इति ।

❀ इति कुल्माषपिण्डीजातकम् ❀

ग्राहकं = दानमाहात्म्यसूचकम् । प्रदानादि = दानादि । अनुत्तरे = श्रेष्ठे । आर्यसंघे = धार्मिकसमुदाये । अदूर इति-पारलौकिक्योऽपि सम्पदो मेऽधुना सुलभा इति भावः ।

इति कुल्माषपिण्डीजातकम् ।

—❀०❀—

## अथ श्रेष्ठिजातकम्

अत्ययमप्यविगणय्य दित्सन्ति सत्पुरुषाः । केन नाम स्वस्थेन न दातव्यं स्यात् । तद्यथानुश्रूयते । बोधिसत्त्वभूतः किलायं भगवान्भाग्यातिशयगुणादुत्थानसम्पदा चाधिगतविपुलधनसमृद्धिरविषमव्यवहारशीलत्वाल्लोके बहुमाननिकेतभूत उदाराभिजनवाननेकविद्याकलाविकल्पाधिगमविमलतरमतिर्गुणमाहात्म्याद्राज्ञा समुपहृतसम्मानः प्रदानशीलत्वाल्लोकसाधारणविभवः श्रेष्ठी बभूव ।

अत्ययं हानिं स्वहानिमपि दानाय उपेक्षन्ते इति भावः। केन पुनः स्वसे लाभवता न दातव्यं स्यात् दानं न कर्तव्यम्? अपि तु कार्यमेव। भाग्यातिशय गुणात् = भाग्यातिशयः सौभाग्य स एव गुणस्तस्मात्। उत्थानसम्पदा = उत्थान सम्पत् उत्साहसम्पत् तया च। अविषमेति सर्वत्र समव्यवहारशीलत्वादित्यर्थः उदारः श्रेष्ठः अभिजनः कुलं तद्वान्। अनेकासां विद्यानां कलानां च ये विकल्पा प्रभेदास्तेषामधिगमेन विमलतरमतिर्निर्मलाशयः। समुपहृतसम्मानः = प्रदत्त सम्मानः। लोके साधारणः सकलजनविश्रुतो विभवो वैभवं यस्य सः।

अर्थिभिः प्रीतहृदयैः कीर्त्यमानमितस्ततः।
त्यागशौर्योन्नतं नाम तस्य व्याप दिशो दश॥ १॥

अर्थिभिरिति। अर्थिभिर्गीतकीर्ति त्यागशौर्यवतस्तस्य नाम दशसु दिक्षु विख्यातं बभूवेति भावः॥ १॥

दद्यान्न दद्यादिति तत्र नाऽऽसीद्विचारदोलाचलमानसोऽर्थी।
ख्यातावदाने हि बभूव तस्मिन्विस्रम्भधृष्टप्रणयोऽर्थिवर्गः॥ २॥

दद्यादिति। अर्थी 'दद्यात् न दद्यात्' इति तत्र विचारदोलाचलमानसं नाऽऽसीत्, हि ख्यातावदाने तस्मिन् अर्थिवर्गः विस्रम्भधृष्टप्रणया बभूव इत्यन्वयः

अयं भावः—याचकजनः तस्य दातृत्वे कदाऽपि सशङ्को न बभूव यतस्तस्मि सञ्जातप्रत्ययाः सर्वे धृष्टप्रणया आसन्। विस्रम्भेण विश्वासेन धृष्टो दृढः प्रणय प्रेम यस्य सः॥ २॥

नाऽसौ जुगोपात्मसुखार्थमर्थं न स्पर्धया लोभपराभवाद्वा।
सत्त्वार्थिदुःखं न शशाक सोढुं नास्तीति वक्तुं च ततो जुगोप॥ ३॥

नासौ इति। असौ आत्मसुखार्थं स्पर्धया लोभपराभवाद्वा अर्थं न जुगोप सत्त्वार्थिदुःखं सोढुं न शशाक ततश्च नास्तीति वक्तुं जुगोप इत्यन्वयः।

असौ श्रेष्ठी आत्मसुखार्थं स्वहिताय स्पर्धया इतरधनिकजनश्लाघया, लोभे पराभवात् पराभूतत्वाद् वा अर्थं न जुगोप न रक्षितवान् न गुप्तं चकार। किन्तु सत्त्वाः प्राणिनस्त एवाऽर्थिनस्तेषां दुःखं सोढुं द्रष्टुमपीति यावत्। न शशाक ततश्च 'नास्ति' 'द्रव्यं मत्सविधे नाऽस्ति' इति [illegible]

जुगोप निह्नुतिं चकार । अर्थात्—नाऽस्तीति कथनमेव जुगोप, अर्थं तु नैव जुगोप सर्वदा दानशीलोऽभूदित्यर्थः ॥ ३ ॥

अथ कदाचित्तस्य महासत्त्वस्य भोजनकाले स्नातानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद्गृहमभिजगाम भिक्षार्थी । समुपेत्य च द्वारकोष्ठके व्यतिष्ठत ।

कुशलो निपुणः, उदारश्च यः सूदः पाचकस्तेन उपकल्पिते विनिर्मिते । तस्य श्रेष्ठिनः यः पुण्यसम्भारः सुकृतसमुच्चयः तदभिवृद्धिकामः । ज्ञानात्मकः योऽग्निः वह्निस्तेन निर्दग्धं सर्वं संसारकर्मफलात्मकं क्लेशेन्धनं यस्य सः । प्रत्येकबुद्धः बुद्धावस्थापन्नो भिक्षुकः ।

अशङ्किताचञ्चलधीरसौम्यमवेक्षमाणो युगमात्रमुर्व्याः ।
तत्राऽवतस्थे प्रणमाभिजातः स पात्रसंसक्तकराग्रपद्मः ॥ ४ ॥

तं भिक्षुकं वर्णयति अशङ्कितेति । अशङ्किताऽचञ्चलधीरसौम्यं उर्व्याः युगमात्रं अवेक्षमाणः प्रणमाऽभिजातः पात्रसंसक्तकराग्रपद्मः सः तत्राऽवतस्थे । अशङ्कितं निःशङ्कं अचञ्चलं अकम्पितं अत एव धीरसौम्यं धैर्यमधुरं उर्व्याः पृथिव्याः युगमात्रं चतुर्हस्तप्रमाणं पुरोवर्तिनं प्रदेशं अवेक्षमाणः, प्रणमः, प्रणामो नमस्कृतिरित्यर्थः । तेन अभिजातः उदारचरितः । तथा प्रतिभासमान इत्यर्थः । पात्रे भिक्षापात्रे संसक्तः कराग्र एव पद्मं यस्य सः पद्माकारकर इत्यर्थः । स भिक्षुस्तत्र द्वारदेशेऽवतस्थे ॥ ४ ॥

अथ मारः पापीयान्बोधिसत्त्वस्य तां दानसम्पदममृष्यमाणस्तद्विघ्नार्थमन्तरा च तं भदन्तमन्तरा च द्वारदेहलीं प्रबलज्वालाकरालोदरमनेकपौरुषमतिगम्भीरं भयानकदर्शनं सरतिभयनिर्घोषं नरकमभिनिर्ममे विस्फुरद्भिरनेकैर्जनशतैराचितम् । अथ बोधिसत्त्वः प्रत्येकबुद्धं भिक्षार्थिनमभिगतमालोक्य, पत्नीमुवाच—भद्रे ! स्वयमार्याय पर्याप्तं पिण्डपातं देहीति । सा तथेति प्रतिश्रुत्य प्रणीतं भक्ष्यभोज्यमादाय

प्रस्थिता। नरकमालोक्य द्वारकोष्ठकसमीपे भयविषादचञ्चलाक्षी सहसा न्यवर्तत। किमेतदिति च भर्त्रा पर्यनुयुक्ता समापतितसाध्वसापिहितकण्ठी तत्कथञ्चित्तस्मै कथयामास।

अथ बोधिसत्त्वः कथमयमार्यो मद्गृहादनवाप्तभिक्ष एव प्रतियास्यतीति ससम्भ्रमं तत्तस्याः कथितमनादृत्य स्वयमेव च प्रणीतं भक्ष्यभोज्यमादाय तस्य महात्मनः पिण्डपातं प्रतिपादयितुकामो द्वारकोष्ठकसमीपसभिर.तरतमतिभीषणमन्तरा नरकं ददर्श। तस्य किं स्विदिदमिति समुत्पन्नवितर्कस्य मारः पापीयान्भवनभित्तेर्विनिःसृत्य संदृश्यमानदिव्याद्भुतवपुरन्तरिक्षे स्थित्वा हितकाम इव नामाऽब्रवीत्। गृहपते महारौरवनामायं महानरकः।

अथ मारः पापीयान् बोधिसत्त्वशत्रुः काम इत्यर्थः। अमृष्यमाणः असहमानः। अन्तरेति मध्ये इत्यर्थः। भदन्तो भिक्षुकः। प्रचलज्वालाकरालोदरं = प्रचलज्वालाजालकरालम्। अनेकपौरुषं = अनेकपुरुषसंकीर्णम्। सप्रतिभयः भयोत्पादकः निर्घोषः महाध्वनिर्यत्र तम्। अथ बोधिसत्त्वः = श्रेष्ठिरूप इति यावत्। आर्याय भिक्षवे। पिण्डपातं भिक्षापिण्डम्। भयविषादचञ्चलाक्षी = भयविषादाभ्यां चञ्चले अक्षिणी यस्याः सा। भयकातराक्षी। समापतितं यत् साध्वसं भयं तेन आसमन्तात् पिहितः कण्ठो यस्याः सा। प्रतियास्यति गमिष्यति। पिण्डपातं प्रतिपादयितुकामः = पिण्डं दातुमिच्छन्। अन्तरा मध्ये। किं स्विदिदमिति किं नु एतदिति समुत्पन्नवितर्कस्य समुत्पन्नविचारस्य। भवनभित्तेः = गृहकुड्यात्, विनिःसृत्य = निर्गत्य। संदृश्यमान अवलोक्यमानं दिव्यं अद्भुतं च वपुः शरीरं यस्य सः। हितकाम इव नाम हितमुपदिशन्निव, हितैषित्वं नाटयन् इत्यर्थः। अब्रवीत् अभाषत। 'महारौरवः' इति नाम यस्य सः। महांश्चासौ नरको निरयः।

अर्थिप्रशंसावचनप्रलुब्धा दित्सन्ति दानव्यसनेन येऽर्थान्।
शरत्सहस्राणि बहूनि तेषामस्मिन्निवासोऽसुलभप्रवासः॥५॥

अर्थीति। अर्थिप्रशंसावचनप्रलुब्धा ये दानव्यसनेन अर्थान् दित्सन्ति, तेषां बहूनि शरत्सहस्राणि अस्मिन् असुलभप्रवासो निवासः (भवति) इत्यन्वयः।



अयं भावः—अर्थिजनकृतप्रशंसावचनप्रलुब्धा ये जनाः सततं दानं ददति

तेऽस्मिन् महानरके सहस्रं समाः निवसन्ति इति । असुलभः दुर्लभः प्रवासोऽन्यत्र गमनं यस्मिंस्तथाविधो निवासो भविदेत्यन्वयः ॥५॥

अर्थस्त्रिवर्गस्य विशेषहेतुस्तस्मिन्हते केन हतो न धर्मः ।
धर्मं च हत्वार्थनिबर्हणेन कथं नु न स्यान्नरकप्रतिष्ठः ॥ ६ ॥

अर्थ इति । अर्थः त्रिवर्गस्य विशेषहेतुः (अस्ति) तस्मिन् हते धर्मः केन न हतः, अर्थनिबर्हणेन धर्मं च हत्वा नरकप्रतिष्ठः कथं नु न स्यात् ? इत्यन्वयः ।

अर्थः धनं त्रिवर्गस्य धर्मार्थकामानां विशेषहेतुः प्रधानकारणं अस्तीति शेषः । 'धर्मादर्थः ततः कामः कामात् सुखमुन्नति' रित्युक्तेः । तस्मिन् हते नाशिते सति धर्मः केन न हतः ? अपि तु हत एव । एवं अर्थस्य द्रव्यस्य निबर्हणेन नाशनेन धर्मं च धर्ममपि हत्वा विनाश्य को नाम जनः नरके प्रतिष्ठा स्थितिर्यस्य सः तथाविधः न भवेत् ॥ ६ ॥

दानप्रसङ्गेन च धर्ममूलं घ्नता त्वयार्थं यदकारि पापम् ।
त्वामत्तुमभ्युद्गतमेतदस्माज्ज्वालाग्रजिह्वं नरकान्तकास्यम् ॥ ७ ॥

दानप्रसङ्गेनेति । दानप्रसङ्गेन च धर्ममूलं अर्थं घ्नता त्वया यत् पापमकारि अस्मात् एतत् ज्वालाग्रजिह्वं नरकान्तकास्यं त्वामत्तुं अभ्युद्गतं (अस्ति) इत्यन्वयः ।

दानप्रसङ्गेन दानव्यसनेन च धर्मस्य मूलं मूलभूतं अर्थं घ्नता नाशयता त्वया यत् पापं दुरितं अकारि कृतं, अस्माद् हेतोः एतत् पुरोवर्ति ज्वालाग्राणि एव जिह्वाः यस्य तत् ज्वालाग्रजिह्वं, नरक एव अन्तकः यमः तस्याऽऽस्यं मुखं त्वामत्तुं भक्षयितुं अभ्युद्गतं समुत्पन्नं वर्तत इति शेषः ॥ ८ ॥

तत्साधु दानाद्विनियच्छ बुद्धिमेवं हि सद्यः पतनं न ते स्यात् ।
विचेष्टमानैः करुणं रुदद्भिर्मा दातृभिर्गाः समताममीभिः ॥ ८ ॥

तत्साधु इति । तव दानात् बुद्धिं साधु विनियच्छ, एवं हि ते सद्यः पतनं न स्यात् । विचेष्टमानैः करुणं रुदद्भिः अमीभिः दातृभिः समतां मा गाः इत्यन्वयः ।

अयं भावः—नरकपातभयात् हेतोः दानात् बुद्धिं विनिवर्तय, तावता च तव पतनं न भविष्यति । एवं च एभिः पुरोऽवलोक्यमानैर्दातृभिः याचकैः ( दातृत्वादेषामेषा दशा इति भावः ) समत्वं मा गच्छेः इति ॥ ८ ॥

प्रतिग्रहीता तु जनोऽभ्युपैति निवृत्तदानापनयः सुरत्वम् ।
तत्स्वर्गमार्गावरणाद्विरम्य दानोद्यमात्संयममाश्रयस्व ॥ ९ ॥

प्रतिग्रहीतेति । प्रतिग्रहीता जनस्तु निवृत्तदानाऽनयः सन् सुरत्वमभ्युपैति, तत् स्वर्गमार्गाऽऽवरणात् दानोद्यमात् विरम्य संयमं आश्रयस्व इत्यन्वयः ।

प्रतिग्रहीता याचकवर्गस्तु निवृत्तो दानमेवाऽनयः दुर्नीतिर्दुराचारो यस्य तथाविधः सन् सुरत्वमभ्युपैति, देवत्वमधिगच्छति, दाता तु नरक एव निपतति इति च प्रकरणवशाद्बोध्यम् । तत् तस्मात् स्वर्गमार्गस्य आवरणात् प्रतिबन्धकात् दानोद्यमाद् विरम्य पराङ्मुखीभूय संयमं अर्थरक्षणरूपं आश्रयस्व आचर इत्यर्थः ।

अथ बोधिसत्त्वो नूनमस्यैतद्दुरात्मनो मम दानविघ्नाय विचेष्टितमित्यवगम्य सत्त्वावष्टम्भघोरं विनयमधुराविच्छेदं नियतमित्यवोचदेनम् ।

विचेष्टितं = आचरणम् । सत्त्वस्य सद्गुणस्य अवष्टम्भोऽवलम्बन तेन घोरं यथा स्यात्तथा विनयेन नम्रतया मधुरः अविच्छेदः अविलम्बो यत्र तथा । नियतं = निश्चितम् ।

अस्मद्धितावेक्षणदक्षिणेन विदर्शितोऽयं भवतार्यमार्गः ।
युक्ता विशेषेण च दैवतेषु परानुकम्पानिपुणा प्रवृत्तिः ॥१०॥

अस्मदिति । अस्मद्धितावेक्षणदक्षिणेन भवताऽयं आर्यमार्गः विदर्शितः, विशेषेण च दैवतेषु परानुकम्पा निपुणा प्रवृत्तिः युक्ता ( एव ) इत्यन्वयः ।

अस्मद्धितैषिणा भवता शोभनमुपदिष्टम् । विदर्शितः प्रदर्शितः, अथवा विकृत्य दर्शितं इत्यपि व्यज्यते । विशेषतश्च देवानां परानुकम्पा युक्ता इति भावः ॥१०॥

दोषोदयात्पूर्वमनन्तरं वा युक्तं तु तच्छान्तिपथेन गन्तुम् ।
गते प्रयासं ह्यपचारदोषैर्व्याधौ चिकित्साप्रणयो विघातः ॥११॥

दोषोदयादिति । दोषोदयात् पूर्वं अनन्तरं वा तत्शान्तिपथेन गन्तुं युक्तं तु, हि अपचारदोषैर्व्याधौ प्रयासं गते सति, चिकित्साप्रणयो विघात एवेत्यन्वयः ।

दोषस्य वातपित्तकफान्यतरजन्यस्य उदयात् उद्भवात् पूर्वं, अनन्तरं अव्यवहितोत्तरकाले वा तस्य दोषस्य शान्तिपथेन निराकरणमार्गेण गन्तुं युक्तं तु, दोषोपशमः कर्तुमुचितस्तावत् । अपचारदोषैः अपथ्यादिभिः व्याधौ रोगे प्रयासं गते प्रयत्नसाध्यतां गते सति, चिकित्साप्रणयः निरन्तरं चिकित्साग्रहः विघातो व्यर्थः विफल एवेत्यर्थः । एष च दृष्टान्तो वक्ष्यमाणाऽर्थद्योतकाय ॥११॥

इदं च दानव्यसनं मदीयं शङ्के चिकित्साविषयव्यतीतम् ।
तथा ह्यनादृत्य हितैषितां ते न मे मनः सङ्कुचति प्रदानात् ॥१२॥

इदमिति । इदं च मदीयं दानव्यसनं चिकित्साविषयव्यतीतमिति शङ्के तथाहि ते हितैषितामनादृत्य, मे मनः प्रदानात् न संकुचति इत्यन्वयः ।

चिकित्साविषयेभ्यो व्यतीतं = अचिकित्स्यम् । न संकुचति = न विरमति । स्पष्टमन्यत् ॥१२॥

दानादधर्मं च यदूचिवांस्त्वमर्थं च धर्मस्य विशेषहेतुम् ।
तन्मानुषी नेयमवैति बुद्धिर्दानादृते धर्मपथो यथार्थः ॥१३॥

दानादिति । दानात् अधर्मं यच्च त्वं ऊचिवान् ( असि ), अर्थं च धर्मस्य विशेषहेतुं ( ऊचिवान् असि ), तत् मानुषी इयं बुद्धिर्न अवैति दानाद् ऋते धर्मपथो यथार्थः किम् ? इत्यन्वयः ।

दानात् अधर्मं पापं यच्च यस्तु त्वं ऊचिवान् उक्तवानसि, अर्थं धनं धर्मस्य विशेषहेतुं मूलकारणं च यदुक्तवानसि, तत् मानुषी मनुष्यसम्बन्धिनी इयं मामकीना बुद्धिर्न अवैति न जानाति न बोद्धुं प्रभवति इति भावः, दानात् ऋते दानं विहाय धर्मरथः धर्ममार्गः यथार्थः किम् ? सफलः कश्चित् ? नैवेति भावः ॥१३॥

निधीयमानः स नु धर्महेतुश्चौरैः प्रसह्याथ विलुप्यमानः ।
ओघोदरान्तर्विनिमग्नमूर्तिर्हुताशनस्याशनतां गतो वा ॥१४॥

'अर्थं च धर्मस्य विशेषहेतु' मित्येव पृच्छन्नाह निधीयमान इति—स निधीयमानः धर्महेतुः नु ( भवति ) अथ चौरैः प्रसह्य विलुप्यमानो वा ओघोदरान्तर्विनिमग्नमूर्तिः हुताशनस्य अशनतां गतो वा ( धर्महेतुर्भवति ) इत्यन्वयः ।

सः द्रव्यराशिः निधीयमानः क्वचित् सुगुप्तं निहितः धर्महेतुः धर्मस्य कारणं नु भवति, नु इति वितर्के । अथ अथवा चौरैः प्रसह्य बलात् विलुप्यमानः अपह्रियमाणः वा धर्महेतुर्भवति इति पूर्ववत् प्रश्नः । अथवा ओघस्य जलौघस्य उदरान्तः विनिमग्नमूर्तिः वाऽर्थः तथा भवति, अथवा हुताशनस्य अग्नेः अशनतां भक्ष्यतां गतो वा द्रव्यसमुदायः धर्महेतुर्भवति ? इत्येवं वद इति शेषः ॥१४॥

यस्माथ दाता नरकं प्रयाति प्रतिग्रहीता तु सुरेन्द्रलोकम् ।
विवर्धितस्तेन च मे त्वयाऽयं दानोद्यमः संयमयिष्यताऽपि ॥१५॥

यद्वेति। यत् च (एतद्) आत्थ 'दाता नरकं प्रयाति, प्रतिग्रहीता तु सुरेन्द्रलोकं प्रयाति,' तेन च संयमयिष्यताऽपि त्वया अयं मे दानोद्यमः विवर्धितः (एव) इत्यन्वयः।

आत्थ=अवादीः। संयमयिष्यता संयमं कुर्वता अवरुन्धता इत्यर्थः। अयं भावः—त्वया क्रियमाणो निषेधो ममोत्साहवर्धनायैव जात इति ॥१५॥

अनन्यथा चास्तु वचस्तवेदं स्वर्गं च मे याचनका व्रजन्तु।
दानं हि मे लोकहितार्थमिष्टं नेदं स्वसौख्योदयसाधनाय ॥१६॥

अनन्यथेति। तव इदं वचः च अनन्यथा अस्तु, मे याचनकाः स्वर्गं च व्रजन्तु हि मे इदं दानं लोकहितार्थं इष्टं, स्वसौख्योदयसाधनाय न (नेष्टम्) इत्यन्वयः।

तवेदं वचः च='दाता नरकं प्रयाती' त्यादिरूपं च अनन्यथा=यथार्थं अस्तु। मे मम याचनकाः=याचका एव याचनकाः, स्वर्गं सुरलोकं च व्रजन्तु प्रयान्तु। हि यतः मे इदं दानं लोकहितार्थं लोककल्याणार्थं इष्टं, लोककल्याणकामनयैव मे दानोद्यम इति भावः। स्वसौख्यस्य स्वसुखस्य य उदयस्तस्य साधनाय पुनः न नेष्टमित्यर्थः ॥१६॥

अथ स मारः पापीयान्पुनरपि बोधिसत्त्वं हितैषीव धीरहस्तेनोवाच—

धीरहस्तेन=गम्भीरताव्याजेन।

हितोक्तिमेतां मम चापलं वा समीक्ष्य येनेच्छसि तेन गच्छ।
सुखान्वितो वा बहुमानपूर्वं स्मर्तासि मां विप्रतिसारवान्वा ॥१७॥

हितोक्तमिति। 'मम एतां हितोक्तिं चापलं वा समीक्ष्य येन (पथा) इच्छसि तेन गच्छ, सुखान्वितः (त्वं) बहुमानपूर्वं वा, विप्रतिसारवान् वा मां स्मर्ताऽसि' इत्यन्वयः।

अयं भावः—मदुक्तिं हितां विरुद्धां वा सम्यग् विचार्य तयोरेकतरं मार्गमनुसर, पश्चात् च सुखलाभे सबहुमानं वा, दुःखान्वितो वा मां स्मरिष्यसि इति। मदुक्त्यनुसरणे सुखमन्यथा तु दुःखमिति तात्पर्यम्। विप्रतिसारवान् विरुद्धफलवान् पश्चात्तापवान् इत्यर्थः ॥१७॥

बोधिसत्त्व उवाच—मार्ष ! मर्षयितु भवान्।
कामं पतामि नरकं स्फुरदुग्रवह्निं ज्वालावलीढशिथिलावनतेन मूर्ध्ना।
न त्वर्थिनां प्रणयदर्शितसौहृदानां सम्मानकालमवमाननया हरिष्ये ॥१८॥

मार्ष=हे साधो ! । काममिति। स्फुरदुग्रवह्निं नरकं ज्वालावलीढशिथिलावनतेन मूर्ध्ना कामं पतामि, प्रणयदर्शितसौहृदानां अर्थिनां तु सम्मानकालं अवमाननया न हरिष्ये इत्यन्वयः।

स्फुरन् ज्वलन् उग्रः भयङ्करः वह्निरग्निर्यत्र तं नरकं, त्वया मार्गमध्ये निर्मिते नरक इत्यर्थः। ज्वालाभिः अग्निशिखाभिः अवलीढो व्याप्तः शिथिलोऽत एव अवनतो यो मूर्धा मस्तकं तेन कामं यथेच्छं पतामि प्रविशामीति यावत्। प्रणयेन प्रेम्णा दर्शितं सौहृदं सुहृद्भावो मित्रत्वं यैस्तेषां अर्थिनां स्वगृहागतानां याचकानां तु सम्मानकालं सन्तर्पणसमयं अवमाननया तिरस्कारेण तेषां प्रत्याख्यानेन इति यावत्, न हरिष्ये न यापयिष्यामि। अर्थिजनतिरस्करणापेक्षया नरकपातः श्रेयान् इति भावः ॥१८॥

इत्युक्त्वा बोधिसत्त्वः स्वभाग्यवलावष्टम्भाज्जानानश्च निरत्ययतां दानस्य निवारणैकरसमवधूय स्वजनपरिजनं, साध्वसानभिभूतमतिरभिवृद्धदानाभिलाषो नरकमध्येन प्रायात्।

स्वभाग्यस्य स्वनियतेर्यत् बलं प्रभावः तस्य अवष्टम्भात् अवलम्बात्। 'जानानश्च निरत्ययतां दानस्य' इति शुद्धः पाठः। दानस्य दानकर्मणो निरत्ययतां निर्विघ्नत्वं अमोघफलत्वं जानानः इत्यर्थः। निवारणैकरसं=अतिशयेन निवारयन्तम्। साध्वस भयं तेनाऽनभिभूतमतिः भयरहितः।

पुण्यानुभावादथ तस्य तस्मिन्नपङ्कजं पङ्कजमुद्बभूव।
अवज्ञयेवावजहास मारं यच्छुक्लयाकेशरदन्तपङ्क्त्या ॥१९॥

पुण्यानुभावादिति। अथ तस्य पुण्यानुभावात् तस्मिन् अपङ्कजं पङ्कजं उद्बभूव, यत् शुक्लया केशरदन्तपंक्त्या अवज्ञयेव मारं अवजहास इत्यन्वयः।

अथ तस्य भगवतो बोधिसत्वस्य पुण्यानुभावात् पुण्यः पवित्रो योऽनुभावः प्रभावः तस्मात् तस्मिन्नरके अपङ्कजं पङ्कान्न जायत इति अपङ्कजं अन्तरिक्ष एव पादविन्यासस्य अधस्तात् पङ्कजं कमलं उद्बभूव आविर्भूत। पादन्यासेषु कमल-

न्याविर्बभूवुरित्यर्थः। यत् कमलं शुक्लया शुभ्रया, केशराः किञ्जल्का एव दन्ता स्तेषां पंक्त्या केशरदन्तान् प्रदाश्य, अवज्ञयेव मारं कामं अवजहास, तस्योपहास चकार इत्युत्प्रेक्षा। हेतूत्प्रेक्षालङ्कारः ॥१९॥

अथ बोधिसत्त्वः पद्मसंक्रमेण स्वपुण्यातिशयनिर्जातेनाभिगम्य प्रत्येकबुद्धं प्रसादसंहर्षपूर्णहृदयः पिण्डपातमस्मै प्रायच्छत्।

पद्मेषु संक्रमेण पादन्यासेन स्वपुण्यातिशयनिर्जातेन=स्वपुण्यप्रभावसञ्जातेन।

मनःप्रसादप्रतिबोधनार्थं तस्याथ भिक्षुर्वियदुत्पपात।
वर्षञ्ज्वलंश्चैव स तत्र रेजे सविद्युदुद्योतपयोदलक्ष्म्या ॥२०॥

मनःप्रसादेति। अथ तस्य मनःप्रसादप्रतिबोधनार्थं भिक्षुर्वियदुत्पपात, तत्र सः सविद्युदुद्योतपयोदलक्ष्म्या वर्षन् ज्वलंश्चैव रेजे इत्यन्वयः।

अथ दानस्वीकरणानन्तरं तस्य बोधिसत्त्वस्य मनःप्रसादस्य चित्तहर्षस्य प्रतिबोधनार्थं उल्लासाय भिक्षुः प्रत्येकबुद्धः वियद् आकाशं उत्पपात उत्पतितोऽभूत्, तत्र गगने पुनः सः भिक्षुः सविद्युदुद्योतः विद्युत्प्रकाशेन सहितः यः पयोदः मेघः तस्य लक्ष्म्या शोभया सहेत्यर्थः, वर्षन् जलं वर्षन्, ज्वलंश्चैव प्रकाशमानः रेजे शुशुभे। वर्षता मेघेन सह प्रीतहृदयः बोधिसत्त्वस्योपरि जलं वर्षन् विद्युत्प्रकाशेन सह समुल्लसंश्च शुशुभे इति भावः ॥ २० ॥

अवमृदितमनोरथस्तु मारो द्युतिपरिमोषमवाप्य वैमनस्यात्।
तमभिमुखमुदीक्षितुं न सेहे सह नरकेण ततस्तिरोबभूव ॥२१॥

अवमृदितेति। अवमृदितमनोरथः मारस्तु वैमनस्यात् द्युतिपरिमोषमवाप्य तं अभिमुखं उदीक्षितुं न सेहे, ततश्च नरकेण सह तिरोबभूव इत्यन्वयः।

अवमृदितो भग्नः मनोरथः विचारो यस्य सः मारः कामस्तु वैमनस्यात् वैमनस्यात् स्वपराजयजनितदुःखादित्यर्थः। द्युतिपरिमोषं=कान्तिनाशं स्वतेजोहानिं अवाप्य लब्ध्वा, तं बोधिसत्त्वं अभिमुखं सम्मुखं उदीक्षितुं द्रष्टुमपि न सेहे शशाक। ततश्च खिन्नः सन् नरकेण स्वनिर्मितेन नरकेण सह तिरोबभूव अन्तर्हितोऽभूत्। पुष्पिताग्रा वृत्तम् ॥२१॥

वाक्यमिदमुपनीतम्। [illegible] दृश्यन्ते सत्पुरुषाः

केन नाम स्वस्थेन न दातव्यं स्यात् । न सत्त्ववन्तः शक्यन्ते भयादप्यगतिं गमयितुमित्येवमप्युन्नेयम् ।

❀ इति श्रेष्ठिजातकम् ❀

उपनीतं=आयातम् । सत्त्ववन्तः=पुण्यप्रभाववन्तः केनाऽपि भयादपि अगतिं असत्कर्म गमयितुं कारयितुं न शक्यन्ते इत्येवमपि उन्नेयं ऊह्यम् ।

❀ इति श्रेष्ठिजातकम् ❀

—:❀:—

## अथ मैत्रीबलजातकम् ।

न परदुःखातुराः स्वसुखमवेक्षन्ते महाकारुणिकाः । तद्यथानुश्रूयते । बोधिसत्त्वः किल स्वमाहात्म्यकारुण्याभिप्रपन्नो जगत्परित्राणाध्याशयः प्रदानदमनियमसौरत्यादिभिर्लोकानुग्रहानुकूलैर्गुणातिशयैरभिवर्धमानः सर्वसत्त्वमैत्रमना मैत्रबलो नाम राजा बभूव ।

महाकारुणिकाः=करुणार्णवाः महाशयाः परदुःखेन आतुरा आकुलाः सन्तः, स्वसुखमपि न प्रवेक्षन्ते न विगणयन्ति, यथाऽस्मिन्नेव जातके मैत्रबलस्य राज्ञो यक्षगणतृप्त्यर्थं स्वशरीरदानम् । स्वमाहात्म्येन कारुण्येन दयया च अभिप्रपन्नः समन्वितः । जगत्परित्राणाध्याशयः=जगत्परित्राणपरायणः । सौरत्यं=सुरतिधर्मेष्वासक्तिः । तदादिभिर्गुणैर्युक्तः । सर्वेषु सत्त्वेषु जीवेषु मैत्रं मित्रभावः मनसि यस्य सः ।

दुःखं सुखं वा यदभूत्प्रजानां तस्यापि राज्ञस्तदभूत्तथैव ।
अतः प्रजारक्षणदक्षिणोऽसौ शस्त्रं च शास्त्रं च परामर्श ॥ १ ॥

दुःखमिति । यत् प्रजानां दुःखं सुखं वाऽभूत् तस्य राज्ञोऽपि तत् तथैव अभूत् । अतः प्रजारक्षणदक्षिणः असौ शस्त्रं च शास्त्रं च परामर्श इत्यन्वयः ।

अयं भावः—प्रजाजनस्य दुःख-सुखे स्वीये इव मन्वानः असौ राजा तासां रक्षणाय राजनीतौ बलविवर्धने च कृतादरोऽभूदिति ॥ १ ॥

नरेन्द्रचूडाधृतशासनस्य तस्य त्वलङ्कारवदास शस्त्रम् ।
विस्पष्टरूपं ददृशे च शास्त्रं नयेषु लोकस्य हितोदयेषु ॥ २ ॥

'शस्त्रं च शास्त्रं इति' पूर्वोक्तं वर्णयन्नाह—नरेन्द्रेति। नरेन्द्रचूडाधृतशासनस्य तस्य शस्त्रं तु अलङ्कारवत् आस, शास्त्रं च लोकस्य हितोदयेषु नयेषु विस्पष्टरूपं ददृशे इत्यन्वयः।

नरेन्द्रैः सामन्तभूपालैः चूडाभिर्धृतशासनस्य मौलिभक्तिशासनस्य तस्य राजर्षेः शस्त्रं तु बलं तु अलंकारवत् भूषणवत् आस, विजेतॄणां राज्ञां अभावात् सैन्यं तु भूषणकल्पमभूत्। शास्त्रं च नीतिशास्त्रपाण्डित्यं च लोकस्य प्रजाजनस्य हितार्थमुदयो येषां तेषु तथाविधेषु नयेषु व्यवहारविशेषेषु प्रजाजनकल्याणाय निर्मितेषु कूप-प्रपा-आराम-शाला-सेतु-निर्माणेषु अन्येष्वपि एवंविधेषु कार्येषु विस्पष्टरूपं=विशदरूपं स्पष्टमिति यावत् ददृशे दृष्टम्॥ २॥

विनिग्रहप्रग्रहयोः प्रवृत्तिर्धर्मोपरोधं न चकार तस्य।
हिताशयत्वान्नयनैपुणाच्च परीक्षकस्येव पितुः प्रजासु॥ ३॥

विनिग्रहप्रग्रहयोरिति। विनिग्रहप्रग्रहयोः प्रवृत्तिः प्रजासु पितुः तस्य परीक्षकस्येव हिताशयत्वात् नयनैपुणात् च धर्मोपरोधं न चकार इत्यन्वयः।

विनिग्रहप्रग्रहयोः निग्रह-अनुग्रहयोः दण्ड-पालनयोरित्यर्थः। प्रवृत्तिः विचारः अनुष्ठानमिति यावत्। प्रजासु प्रजाजनविषये पितुः पितृकल्पस्य तस्य राज्ञः, परीक्षकस्य उदासीनस्य परीक्षितुकामस्येव हिताशयत्वात् परीक्ष्यजनहितैषित्वात्, नयनैपुणात्=नीतिकुशलत्वाच्च धर्मस्य भूतदयादिरूपस्य उपरोधं बाधां न चकार। अयं भावः—दण्ड्यान् दण्डयतः अनुग्राह्यान् अनुगृह्णतश्च तस्य नरेन्द्रस्य नीतिविदांवरत्वात् हिताशया प्रवृत्तत्वाच्च धर्मोपरोधो नाऽभूत् इति॥ ३॥

तस्यैवं धर्मेण प्रजाः पालयतः सत्यत्यागोपशमप्रज्ञादिभिश्च परहितपरिणामनात्सविशेषोदात्तक्रमैर्बोधिसम्भारविधिभिरभिवर्धमानस्य कदाचित्कस्मिंश्चिदपराधे यक्षाणामधिपतिना स्वविषयात्प्रव्राजिता ओजोहाराः पञ्च यक्षाः परवधदक्षास्तद्विषयमभिजग्मुः। व्यपगतसर्वोपद्रवत्वाच्च नित्यप्रवृत्तविविधोत्सवं परया सम्पदा समुपेतरूपं प्रमुदिततुष्टपुष्टजनमभिसमीक्ष्य तद्विषयं तन्निवासिनां पुरुषाणामोजांस्यपहर्तुं तेषामभिलाषो बभूव।

सत्यं, त्यागः, उपशमः=इन्द्रियनिग्रहः प्रज्ञा बुद्धिः, एतदादिभिः गुणैरिति शेषः। परहितस्य जनहितस्य परिणामनात् निर्माणात् सविशेषमुदात्तः श्रेष्ठः

क्रमः प्रकारो येषां तैः, बोधिसम्भारः सम्यग् ज्ञानाभ्यासं तस्य त्रिविधैरनुभवैः । प्रव्राजिताः बहिष्कृताः । ओजोहाराः=जनानां ओजः ओजस्तत्वं बलकान्त्यादिरूपं हरन्ति इति तथाविधाः । तद्विषयं=तस्य राज्ञः विषयं देशम् ।

ते परेणाऽपि यत्नेन सम्प्रवृत्ताः स्वकर्मणि ।
नैव तद्विषयस्थानां हर्तुमोजः प्रसेहिरे ॥ ४ ॥

त इति । परेणाऽपि यत्नेन स्वकर्मणि संप्रवृत्तास्ते तद्विषयस्थानां ओजः हर्तुं नैव प्रसेहिरे इत्यन्वयः ।

परेणाऽपि अतिशयितेनाऽपि यत्नेन प्रयत्नेन स्वकर्मणि संप्रवृत्ताः जनाभिभवे व्यासक्तास्ते पञ्च यक्षाः तद्विषयस्थानां तद्देशवासिनां ओजोऽपहर्तुं नैव प्रसेहिरे नैव समर्था बभूवुः ॥ ४ ॥

तस्य प्रभावातिशयान्नृपस्य ममेति यत्रैव बभूव बुद्धिः ।
सैवास्य रक्षा परमास तस्मादोजांसि हर्तुं न विषेहिरे ते ॥ ५ ॥

तस्येति । तस्य नृपस्य प्रभावातिशयात् यत्रैव मम इति बुद्धिः बभूव, सैव अस्य परं रक्षा आस, तस्मात् ते ओजांसि हर्तुं न विषेहिरे इत्यन्वयः ।

तस्य नृपस्य राजर्षेः प्रभावातिशयात् पुण्यप्रभावात् यत्रैव सर्वत्र प्रजाजनविषये मम इति बुद्धिः ममत्वबुद्धिः बभूव, सैव ममत्वबुद्धिरेव अस्य जनस्य परमत्यन्तं रक्षा रक्षिका आस अभूत् । तस्मात् ततश्च ते यक्षाः जनानां ओजांसि हर्तुं अपहर्तुं न विषेहिरे न प्रभवन्ति स्म ॥ ५ ॥

यदा च परमपि प्रयत्नं कुर्वन्तो नैव शक्नुवन्ति स्म कस्यचिद्विषयनिवासिनो जनस्यौजोऽपहर्तुमथ तेषां परस्परमवेक्ष्यैतदभूत् । किं नु खल्विदं मार्षाः !

परस्परमवेक्ष्य अन्योन्यं विचिन्त्य, एतदभूत्=एष विचारः प्रवृत्त इति भावः । मार्षाः साधवः इति सम्बोधनम् ।

अस्मत्प्रभावप्रतिघातयोग्या विद्यातपःसिद्धिमया विशेषाः ।
न सन्ति चैषामथ चाद्य सर्वे व्यर्थाभिधानत्वमुपागताः स्मः ॥ ६ ॥

अस्मदिति । अस्मत्प्रभावप्रतिघातयोग्याः विद्यातपःसिद्धिमयाः विशेषाः एषां च न सन्ति, अथ च अद्य सर्वे (वयं) व्यर्थाभिधानत्वं उपागताः स्मः इत्यन्वयः ।

अस्मत्प्रभावः = अस्माकं योऽनुभावः तस्य प्रतिघाते प्रतिबन्धे योग्याः समर्थ विद्या मन्त्रविद्या तपस्तदनुष्ठानादि ताभ्यां या सिद्धिः शक्तिलाभस्तन्मयाः तत्स्वरू विशेषाः विशिष्टाः प्रभावाः एषामत्रत्यानां जनानां च न सन्ति, अथ च तथा अद्य सर्वे वयं व्यर्थाभिधानत्वं व्यर्थाभिधानस्य भावो व्यर्थाभिधानत्वं उपागत रमः प्राप्ताः स्मः। 'ओजोहाराः' इत्यस्माकमभिधानमपि अद्य व्यर्थतां गतमि भावः ॥ ६ ॥

अथ ते यक्षा ब्राह्मणवर्णमात्मानमाभिनिर्माय समनुचरन्तो ददृ प्रत्यरण्यचरमन्यतमं गोपालकं सशाद्वले छायाद्रुममूले सोपानत्कं संनिष सपल्लवैर्वनतरुकुसुमैर्विरचितां मालामुद्वहन्तं दक्षिणतो विन्यस्तदण्डपर शुमेकाकिनं रज्जुवर्तनव्यापृतं प्रक्ष्वेडितविलासेन गायन्तमासीनं समुपेत्य चैनमूचुः। अथथददकाकाकाका। भो गवां संरक्षाधिकृत। एव विविक्ते निर्जनसम्पातेऽस्मिन्नरण्ये विचरन्नेवमेकाकी कथं न बिभे षीति। स तानालोक्याऽब्रवीत्। कुतो वा भेतव्यमिति। यक्षा ऊचुः किं त्वया न श्रुतपूर्वा यक्षराक्षसानां पिशाचानां वा निसर्गरौद्र प्रकृतिरिति।

ब्राह्मणस्येव वर्ण आकृतिर्यस्य तम्। अरण्येषु भ्रमन्तं प्रत्यरण्यचरम्। सशाद्व = हरिततृणशोभिनि, छायाद्रुममूले = घनच्छायवृक्षतले। उपानद्भ्यां स सोपानत्कम्। रज्जुवर्तने निर्माणे व्यापृतम्। प्रक्ष्वेडितं विलासेन स्वराणामारो वरोहव्यापारेण गायन्तम्। अथथेति भीतिप्रदर्शनाय शब्दोच्चारणम्। विविक्ते शून्ये श्रुतपूर्वा = पूर्वं श्रुता श्रुतपूर्वा। निसर्गेण स्वभावेन रौद्रा भीमा।

सहायमध्येऽपि हि वर्तमानो विद्यातपःस्वस्त्ययनैरुपेतः।
येभ्यः कथञ्चित्परिमोक्षमेति शौर्यादवज्ञातभयोऽपि लोकः ॥ ७ ॥

सहायमध्ये इति। हि विद्यातपःस्वस्त्ययनैरुपेतः, सहायमध्ये वर्तमानोऽ शौर्यादवज्ञातभयः लोकोऽपि येभ्यः कथञ्चित् परिमोक्षमेति इत्यन्वयः।

हि यतः विद्यया मन्त्रादिविद्यया, तपोभिर्जपानुष्ठानादिरूपैः, स्वस्त्ययनैः ब्राह्म कृतैः शान्त्यादिकर्मभिश्च उपेतः युक्तः, सहायानां सहायकजनानां मध्ये वर्तमानः तथाविधोऽपि, शौर्यात् बलदर्पात् अवज्ञातं भयं येन सः, अगणितभीतिलेशः लोक

जनोऽपि नृपादिरिति यावत् । येभ्यः पिशिताशनेभ्यो यक्षादिभ्यः कथञ्चित् परिमोक्षं मुक्तिं एति लभते ॥ ७ ॥

तेभ्यो नृमेदःपिशिताशनेभ्यः कथं भयं तेऽस्ति न राक्षसेभ्यः ।
विविक्तगम्भीरभयानकेषु सहायहीनस्य वनान्तरेषु ॥८॥

तेभ्य इति । विविक्तगम्भीरभयानकेषु वनान्तरे सहायहीनस्य ते तेभ्यः नृमेदःपिशिताशनेभ्यः राक्षसेभ्यः कथं भयं नाऽस्ति ? इत्यन्वयः ।

विविक्तानि शून्यानि अत एव गम्भीराणि भयानकानि भयप्रदानि च तेषु वनान्तरेषु अरण्येषु सहायहीनस्य सहायकरहितस्य ते तव तेभ्यः पूर्वोक्तेभ्यः नराणां मेदः मेदो धातुः, पिशितं मांसं, च अशनं भक्ष्यं येषां तेभ्यः । नरभक्षकेभ्य इत्यर्थः । राक्षसेभ्यो निशाचरेभ्यः यक्षादिभ्यश्चेति तात्पर्यम् । कथं भयं भीतिर्नाऽस्ति नोद्भवति इति प्रश्नोऽयम् ॥८॥

इत्युक्ते स गोपालकः प्रहस्यैनानुवाच—

जनः स्वस्त्ययनेनाऽयं महता परिपाल्यते ।
देवेन्द्रेणाऽप्यशक्योऽयं किं पुनः पिशिताशनैः ॥९॥

जन इति । अयं जनः महता स्वस्त्ययनेन परिपाल्यते, (अतः) अयं देवेन्द्रेणाऽपि अशक्यः, पिशिताशनैः पुनः किम् ? इत्यन्वयः ।

अयं जनः अहं, अत्रत्यः प्रजाजनो वा महता स्वस्त्ययनेन रक्षकेण शान्तिकर्मणा परिपाल्यते रक्ष्यते, अत एव देवेन्द्रेण शक्रेणाऽपि अशक्यः अभिभवितुं अशक्यः इत्यर्थः । पिशिताशनैः राक्षसैः पुनः अजेय इति किं वक्तव्यम् ॥ ९ ॥

तेन गेह इवारण्ये रात्रावपि यथा दिवा ।
जनान्त इव चैकोऽपि निर्भयो विचराम्यहम् ॥१०॥

तेनेति । तेन अरण्ये गेह इव, रात्रौ अपि दिवा यथा, एकोऽपि जनान्त इव, अहं निर्भयः सन् विचरामि इत्यन्वयः ।

तेन स्वस्त्ययनेन हेतुना अरण्ये वनेऽपि गेह इव, स्वगृह इव, रात्रौ निशायामपि दिवा यथा दिवसवत्, एकः एकलोऽपि जनानामन्तर्मध्य इव जनसमूहमध्यगत इव, अहं निर्भयः सन् विचरामि भ्रमामि ॥१०॥

अथैनं ते यक्षाः कुतूहलप्राबल्यात्सादरमुत्साहयन्त इवोचुः—

तत्कथय कथय तावद्भद्र कीदृशोऽयं युष्माकं स्वस्त्ययनविशेष इति। स तान्प्रहसन्नुवाच—श्रूयतां यादृशोऽयमस्माकमत्यद्भुतः स्वस्त्ययनविशेषः।

कुतूहलं कौतुकं जिज्ञासेति यावत्। अत्यद्भुतः विलक्षणः।

कनकगिरिशिलाविशालवक्षाः शरदमलेन्दुमनोज्ञवक्त्रशोभः।
कनकपरिघपीनलम्बबाहुर्वृषभनिभेक्षणविक्रमो नरेन्द्रः ॥११॥

कनकगिरिशिलेति। कनकगिरिशिलाविशालवक्षाः, शरदमलेन्दुमनोज्ञवक्त्रशोभः, कनकपरिघपीनलम्बबाहुः वृषभनिभेक्षणविक्रमः (अस्माकं) नरेन्द्र (एव स्वस्त्ययनम्) इत्यन्वयः।

कनकगिरिः सुवर्णपर्वतः सुमेरुः तस्य शिला शिलातलं तद्वत् विशालं विस्तृतं वक्षः उरःस्थलं यस्य सः, शरदि शरदृतौ अमलो निर्मलः य इन्दुश्चन्द्रस्तत्सदृशी मनोज्ञा मनोहरा वक्त्रशोभा मुखकान्तिर्यस्य सः, कनकस्य सुवर्णस्य यः परिघोऽर्गलदण्डः तद्वत् पीनौ पुष्टौ लम्बौ आजानुलम्बिनौ च बाहू यस्य सः, वृषभनिभः ईक्षणे विक्रमः यस्य सः, शत्रून् दृष्ट्वा वृषभो रक्तेक्षणः सन् यथा स्वशौर्यं दर्शयति, एवं युद्धेषु रोषारुणया दृष्ट्यैव शत्रून् दग्धुकामः। वस्तुतस्तु—दर्शनीयपराक्रम इत्यर्थः। पाठस्तु विसंष्ठुल एव। एवंविधः अस्माकं नरेन्द्रः भूपाल एव परं स्वस्त्ययनं अस्माकं कृते वर्तत इति तात्पर्यम् ॥११॥

ईदृशोऽस्माकं स्वस्त्ययनविशेषः। इत्युक्त्वा सामर्षविस्मयस्तान्यक्षानवेक्षमाणः पुनरुवाच—आश्चर्यं वतेदम्।

सामर्षविस्मयः=अमर्षः ईषदुत्पन्नो रोषः, विस्मयः आश्चर्यं, च ताभ्यां सहितः।

एवं प्रकाशो नृपतिप्रभावः कथं नु वः श्रोत्रपथं न यातः।
अत्यद्भुतत्वादथवा श्रुतोऽपि भवत्सु विप्रत्ययतो न रूढः ॥१२॥

एवमिति। एवं प्रकाशो नृपतिप्रभावः वः श्रोत्रपथं कथं नु न यातः? अथवा श्रुतोऽपि अत्यद्भुतत्वात् विप्रत्ययतो भवत्सु न रूढः किम्?, इत्यन्वयः।

अय भावः—एवं जगत्प्रसिद्धोऽपि नृपतिप्रभावो भवद्भिः कथं नाऽभावि? अथवा श्रुतोऽपि आश्चर्यमयत्वात् संदिहानैर्भवद्भिरत्र विश्वासो न कृतोऽत एव विस्मृतश्च इति मन्ये ॥१२॥

शङ्के गुणान्वेषणविक्लवो वा देशी जनोऽसावकुतूहलो वा ।
विवर्जितो भाग्यपरिक्षयाद्वा कीर्त्या नरेन्द्रस्य यतोऽभ्युपैति ॥१३॥

शङ्क इति । असौ देशी जनः गुणान्वेषणविक्लवो वा अकुतूहलो वा, भाग्यपरिक्षयात् नरेन्द्रस्य कीर्त्या विवर्जितो वा इति शङ्के, यतः ( प्रष्टुं ) अभ्युपैति इत्यन्वयः ।

असौ भवल्लक्षणः देशी देशान्तरवासी जनः गुणान्वेषणे विक्लवः असमर्थः अगुणज्ञो वा, नाऽस्ति कुतूहलं राजचरितश्रवणे यस्य सः अकुतूहलः तथाविधो वा, भाग्यपरिक्षयात् सौभाग्यनाशात् वा नरेन्द्रस्य राजर्षेः कीर्त्या कीर्तिश्रवणेन विवर्जितः रहितः (अस्तीति) शङ्के मन्ये, यतः अधुना तस्य वृत्तान्तं प्रष्टुं मत्सकाशमभ्युपैति ॥१३॥

तदस्ति वो भाग्यशेषं यत्तादृशाद्देशकान्तारादिहागताःस्थ । यक्षा ऊचुः—भद्रमुख ! कथय किंकृताऽयमस्य राज्ञः प्रभावो यदस्यामानुषा न प्रसहन्ते विषयवासिनं जनं हिंसितुमिति । गोपालक उवाच—स्वमाहात्म्याधिगतः प्रभावोऽयमस्माकं महाराजस्य । पश्यत महाब्राह्मणाः ।

भाग्यशेषं सौभाग्याऽवशेषः । देशकान्तारात् = दुर्देशात् । किंकृतः = किंहेतुकः । अमानुषाः यक्षादयः । स्वस्य माहात्म्येन उदारचारित्र्येण अधिगतः प्राप्तः । महाब्राह्मणाः पूज्या ब्राह्मणाः ।

मैत्री तस्य बलं ध्वजाग्रशबलं त्वाचारमात्रं बलं
नाऽसौ वेत्ति रुषं न चाऽऽह परुषं सम्यक् च गां रक्षति ।
धर्मस्तस्य नयो न नीतिनिकृतिः पूजार्थमर्थः सता-
मित्याश्चर्यमयोऽपि दुर्जनघनं गर्वं च नाऽऽलम्बते ॥१४॥

मैत्रीति । तस्य मैत्री ( एव ) बलं, ध्वजाग्रशबलं बलं तु आचारमात्रम् । असौ रुषं न वेत्ति, परुषं च न आह, गां च सम्यक् रक्षति । तस्य धर्मः ( एव ) नयः नीतिनिकृतिः न, अर्थः सतां पूजार्थं ( अस्ति ) इति आश्चर्यमयोऽपि सः दुर्जनघनं गर्वं च नाऽऽलम्बते इत्यन्वयः ।

तस्य राज्ञः मैत्री सर्वसत्त्वेषु मित्रभाव एव बलं सैन्यं, मित्रभावतः सर्वेषां वशीकरणात् स एव बलं, ध्वजाग्रैः ध्वजानां केतूनां अग्रैः अग्रभागैः विविधवर्णाभिः पताकाभिः शबलं चित्रं, बलं तु सैन्यं तु आचारमात्रं आचारमात्रपरिपालनाय राजधर्मनिर्वहणाय । असौ राजा रुषं क्रोधं न वेत्ति, क्रोधं नैव जानाति,

अत एव परुषं कठोरं च वचनमिति यावत्। न आह कदाऽपि न अभाषत। गां धरां प्रजाजनांश्चेति यावत्, सम्यक् साधु रक्षति परिपाति। तस्य नृपस्य धर्मः धर्माचरणं तदेव नयो राजनीतिः, नीतिनिकृतिः नीतिषु प्रसिद्धं शाठ्यं पुनः नीतिर्नाऽस्तीति यावत्। अर्थः द्रव्यं सतां साधूनां, याचकानां वा पूजार्थं सन्तोषार्थं पालनार्थमिति यावत्। अस्ति इति शेषः। इत्येवं आश्चर्यमयः लोकोत्तरचरितशाली अपि सः दुर्जनानां घनं घनतरप्रियं गर्वं मदं च नाऽऽलम्बते न बिभर्ति। एवंविध—सकलसद्गुणरत्नाकरस्य राज्ञः सर्वे वयं प्रजाजनाः निर्भयाः स्मः इति तात्पर्यम्। 'शार्दूलविक्रीडितं' छन्दः ॥१४॥

एवमादिगुणशतसमुदितोऽयमस्माकं स्वामी। तेनाऽस्य न प्रसहन्ते विषयनिवासिनं जनं हिंसितुमुपद्रवाः। अपि च। कियदहं वः शक्ष्यामि वक्तुम्। नृपतिगुणश्रवणकौतूहलैस्तु भवद्भिर्नगरमेव युक्तं प्रवेष्टुं स्यात्। तत्र हि भवन्तः स्वधर्मानुरागाद्व्यवस्थितार्यमर्यादं नित्यक्षेमसुभिक्षत्वात्प्रमुदितसमृद्धमनुद्धतोदात्तवेषमभ्यागतातिथिजनविशेषवत्सलं नृपतिगुणाक्षिप्तहृदयं तत्कीर्त्याश्रयाः स्तुतीर्मङ्गलमिव स्वस्त्ययनमिव च प्रहर्षादभ्यस्यन्तं जनं दृष्ट्वा राज्ञो गुणविस्तरमनुमास्यन्ते। सत्यां च गुणबहुमानोद्भावनायां तद्दिदृक्षया यूयमवश्यं तद्गुणप्रत्यक्षिणो भविष्यथेति। अथ ते यक्षाः स्वप्रभावप्रतिघातात्तस्मिन्राजनि सामर्षहृदया भावप्रयुक्तयाऽपि युक्तया तया तद्गुणकथया नैव मार्दवमुपजग्मुः।

समुदितः समन्वितः। उपद्रवाः आपदः। स्वधर्मे अनुरागात् प्रेम्णा व्यवस्थिता नियता आर्याणां साधूनां मर्यादा सम्मानादि यस्मिंस्तम्। क्षेमसुभिक्षेति नित्यं कल्याणधान्यसमृद्धियुतत्वात्। अनुद्धतः अनश्लीलः उदात्तः योग्यः वेषो नेपथ्यादि यस्य तम्। अभ्यस्यन्तं पुनः पुनर्गायन्तम्। अनुमास्यन्ते अनुमानेन ज्ञास्यन्ति। तद्गुणप्रत्यक्षिणः तद्गुणदर्शिनः। सामर्षहृदयाः सक्रोधमानसाः। भावेन याथार्थ्येन प्रयुक्तया वर्णितया।

प्रायेण खलु मन्दानाममर्षज्वलितं मनः।
यस्मिन्वस्तुनि तत्कीर्त्या तद्विशेषेण दह्यते ॥१५॥

प्रायेणेति। मन्दानां यस्मिन् वस्तुनि मनः अमर्षज्वलितं (भवति) प्रायेण खलु तत् तत्कीर्त्या विशेषेण दह्यते इत्यन्वयः।

मन्दानां मूढानां यस्मिन् वस्तुनि, यत्र यद्विषये वा, मनः चित्तं अमर्षेण रोषेण उत्क्षिप्तं तप्तं भवति, प्रायेण बाहुल्येन खलु तत् मनः तस्य वस्तुनः पुरुषस्य वा कीर्त्या कीर्तिश्रवणेन विशेषेण अतिशयेन दह्यते पीड्यते ॥ ५॥

प्रदानप्रियतां तु समभिवीक्ष्य तस्य राज्ञस्ते यक्षास्तदपकारचिकीर्षवः समभिगम्य राजानं सन्दर्शनकाले भोजनमयाचन्त । अथ स राजा प्रमुदितमनास्तदधिकृतान्पुरुषान्समादिदेश क्षिप्रमभिरुचितं भोजनं ब्राह्मणेभ्यो दीयतामिति । अथ ते यक्षाः समुपहृतं राजार्हमपि भोजनं हरिततृणमिव व्याघ्रा नैव प्रत्यगृह्णन्नैवंविधं भोजनं वयमश्नीम इति । तच्छ्रुत्वा स राजा समभिगम्यैतानब्रवीत् । अथ कीदृशं भोजनं युष्माकमुपशेते । यावदाहरणमन्विष्यतामिति । यक्षा ऊचुः—

अपकारचिकीर्षवः अपकारं कर्तुमिच्छन्तः । तदधिकृतान् = भोजनाधिकारिणः । अभिरुचितं स्वादु । युष्माकमुपशेते युष्माकं प्रियम् ।

प्रत्यग्रोष्माणि मांसानि नराणां रुधिराणि च ।
इत्यन्नपानं पद्माक्ष ! यक्षाणामक्षतव्रत ॥१६॥

प्रत्यग्रोष्माणीति । हे अक्षतव्रत ! पद्माक्ष ! नराणां प्रत्यग्रोष्माणि मांसानि, रुधिराणि च इति यक्षाणां अन्नपानं ( अस्ति ) इत्यन्वयः ।

हे अक्षतव्रत ! न क्षतं उपहतं व्रतं यस्य सः तत्सम्बुद्धौ हे अर्थिजनकामपूरक ! पद्माक्ष ! कमलनयन ! नराणां प्रत्यग्राणि नवीनानि अत एव ऊष्माणि कदुष्णानि मांसानि, रुधिराणि तथाविधान्येव शोणितानि चेति यक्षाणां क्रमेण अन्नपानं भक्ष्यं पेयं च वर्तत इति शेषः ॥१६॥

इत्युक्त्वा दंष्ट्राकरालवदनानि दीप्त-पिङ्गल-केकर-रौद्रनयनानि स्फुटितचिपिटविरूपघोणानि ज्वलदनलकपिलकेशश्मश्रूणि सजलजलधरान्धकाराणि विकृतभीषणानि स्वान्येव वपूंषि प्रत्यपद्यन्त । समभिवीक्ष्य चैनान्स राजा पिशाचाः खल्विमे न मानुषास्तेनाऽस्मदीयमन्नपानं नाऽभिलषन्तीति निश्चयमुपजगाम ।

दीप्तानि उज्ज्वलानि पिङ्गलानि पिशङ्गवर्णानि केकराणि ईषत्तिर्यग्भावभाञ्जि अत एव रौद्राणि भयावहानि नयनानि येषां तानि । स्फुटिताः भग्नाः चिपिटाः

ह्रस्वाः अत एव विरूपाः घोणाः नासिकाः येषु तानि । सजलेति कृष्णवर्णानि वपूंषि प्रत्यपद्यन्त शरीराणि धारयामासुः ।

अथ तस्य नरेन्द्रस्य प्रकृत्या करुणात्मनः ।
भूयसी करुणा तेषु समभूच्छुद्धचेतसः ॥१७॥

अथेति । अथ प्रकृत्या करुणात्मनः शुद्धचेतसः तस्य नरेन्द्रस्य तेषु भूयसी करुणा समभूत्, इत्यन्वयः ।

स्वभावतः करुणापूर्णहृदयस्य राज्ञः मांसाहारिषु तेष्वतीवाऽनुकम्पा समजायत इति भावः ॥१७॥

करुणैकतानहृदयश्च तान्यक्षाननुशोचन्नियतमीदृशमर्थं चिन्तयामास।

करुणायामेकतानं सर्वात्मना मग्नं हृदयं यस्य सः । 'एकतानोऽनन्यवृत्तिः' रित्यमरः ।

दयावतस्तावदिदमन्नपानं सुदुर्लभम् ।
प्रत्यहं च तदन्वेष्यं किन्नु दुःखमतः परम् ॥१८॥

दयावत इति । दयावतः ( जनस्य ) तावत् इदं अन्नपानं सुदुर्लभं, प्रत्यहं च तद् अन्वेष्यं ( भवति ), अतः परं किंनु दुःखम् ? इत्यन्वयः ।

दयावतो दयार्द्रस्य जनस्य तावत् इदं अन्नपानं भक्ष्यपेयादि सुदुर्लभं असम्भावनीयमित्यर्थः । भवतां चैतत् अन्नपानं नरमांसादिरूपं प्रत्यहं अन्वेष्यं अन्वेषणीयं भवति । अतः परं एतादृशकुत्सितान्वेषणात् परं किंनु दुःखम् ? ॥१८॥

निर्दयस्याऽप्यशक्तस्य विघातैकरसः श्रमः ।
शक्तस्याऽप्यहिताभ्यासात्किंस्वित्कष्टतरं ततः ॥१९॥

निर्दयस्येति । निर्दयस्य अपि अशक्तस्य ( एवंविधः ) श्रमः विघातैकरसः ( भवति ), शक्तस्याऽपि अहिताभ्यासात् ततः कष्टतरं किंस्वित् ( अस्ति ) इत्यन्वयः।

अयं भावः— यदि अशक्तः निर्दयः एवंविधं नृशंसं कार्यं कर्तुं वाञ्छति, तर्हि तस्य असामर्थ्यात् श्रमो विफलः, यदि समर्थोऽपि नित्यमेतदाचरति तर्हि उभयलोकविरुद्धकार्यकरणात् सोऽपि हतः इति ॥१९॥

एवंविधाहारपरायणानां कारुण्यशून्याशिवमानसानाम् ।
प्रत्याहमेषां वहतां स्वमर्थं दुःखानि यास्यन्ति कदा नु नाशम् ॥२०॥

एवंविधेति । एवंविधाहारपरायणानां, कारुण्यशून्याऽशिवमानसानां, प्रत्यहं स्वमर्थं दहतामेषां दुःखानि कदा नु नाशं यास्यन्ति इत्यन्वयः ।

एवंविधो वीभत्सो य आहारस्तत्परायणानां, कारुण्यं करुणा तया शून्यमत एव अशिवं अमङ्गलं कठोरं मानसं चित्तं येषां तेषां, प्रत्यहं प्रतिदिनम् । 'प्रत्याह' मिति मूले छन्दोऽनुरोधेन विसंष्ठुलः पाठः । अथवा प्रति-आ-अहं प्रतिदिवसमभिव्याप्य इति वाऽर्थः । स्वमर्थं स्वं चरित्रं दहतां नाशयतां एषां यक्षाणां दुःखानि मांसाशित्व—क्रौर्यादिरूपाणि कदा नु कदा खलु नाशं विलयं यास्यन्ति ॥२०॥

तत्कथमिदानीमहमेषामीदृशाहारसम्पादनादेकाहमपि तावत्परहिंसाप्राणविघातं कुर्याम् ।

परहिंसाप्राणविघातं = परहिंसाप्रतिबन्धम् ।

नहि स्मराम्यर्थितयागतानामाशाविपर्यासहतप्रभाणि ।
हिमानिलम्लापितपङ्कजानां समानदैन्यानि मुखानि कर्तुम् ॥२१॥

नहीति । अर्थितयाऽऽगतानां आशाविपर्यासहतप्रभाणि हिमानिलम्लापितपङ्कजानां समानदैन्यानि मुखानि कर्तुं नहि स्मरामि इत्यन्वयः ।

अर्थितयाऽऽगतानां याचकानां जनानां आशा वाञ्छितप्राप्त्याशा तस्याः विपर्यासेन वैफल्येन हतप्रभाणि मलिनानि अत एव हिमानिलेन तुषारसमीरणेन म्लापितानां म्लानानां पङ्कजानां समानदैन्यानि समानदीनकान्तीनि मुखानि कर्तुं विधातुं न स्मरामि । अर्थिजनानां मया कदाऽपि निराशया म्लानवदनता न कृतेति यावत् ॥२१॥

भवतु । दृष्टम् ।

स्वतः शरीरात्स्थिरपीवराणि दास्यामि मांसानि सशोणितानि ।
अतोऽन्यथा को हि मम क्रमः स्यादित्यागतेष्वर्थिषु युक्तरूपः ॥

स्वत इति । स्वतः शरीरात् स्थिरपीवराणि सशोणितानि मांसानि दास्यामि, हि इति आगतेषु अर्थिषु युक्तरूपः अतोऽन्यथा कः (खलु) मम क्रमः स्यात् ? इत्यन्वयः ।

स्वतः शरीरात् स्वस्मात् शरीरात् स्थिराणि दृढानि अत एव पीवराणि पुष्टानि, सशोणितानि सरुधिराणि मांसानि दास्यामि, एभ्यः समर्पयिष्यामि, हि यतः इति

एवमागतेषु अर्थिषु याचकवृत्त्या समागतेषु एषु युक्तरूपः योग्यतमः अतोऽन्यथा स्वशरीरार्पणादितरः कः खलु मम क्रमः मया कर्तुं योग्यः सत्कारविधिः स्यात्। नाऽन्य इति भावः ॥२२॥

स्वयं मृतानां हि निरूष्मकाणि भवन्ति मांसानि विशोणितानि ।
प्रियाणि चैषां नहि तानि सम्यग् बुभुक्षया पीडितविग्रहाणाम् ॥

स्वयमिति । हि स्वयं मृतानां मांसानि निरूष्मकाणि विशोणितानि च भवन्ति, तानि च सम्यग् बुभुक्षया पीडितविग्रहाणां एषां प्रियाणि नहि (भवेयुः) इत्यन्वयः ।

'नान्य उपायो विद्यत' इति पूर्वोक्तं विशदयति—हि यतः स्वयं मृतानां जीवानां मांसानि निरूष्मकाणि शीतलानि कठोराणि चेति यावत् । विशोणितानि रुधिर-रहितानि च भवन्ति, तानि च तथाविधानि मांसानि च सम्यग् बुभुक्षया तीव्रया क्षुधा पीडितविग्रहाणां म्लानगात्राणां एषां प्रियाणि रुचिकराणि नहि भवेयुः ॥२३॥

जीवतोऽपि च कुतोऽहमन्यस्मान्मांसमादास्ये मामभिगम्य चैते तथैव क्षुत्तर्षपरिक्षामनयनवदना निष्फलाशाप्रणयत्वादधिकतरविघातातुरमनसः कथं नाम प्रतियास्यन्ति । तदिदमत्र प्राप्तकालम् ।

जीवतः प्राणिनः । आदास्ये ग्रहीष्यामि । क्षुत् बुभुक्षा तर्षः पिपासा ताभ्यां परिक्षामाणि नयनानि वदनानि च येषां ते ।

दुष्टव्रणस्येव सदाऽऽतुरस्य कडेवरस्याऽस्य रुजाकरस्य ।
करोमि कार्यातिशयोपयोगादत्यर्थरम्यं प्रतिकारखेदम् ॥२४॥

दुष्टव्रणस्येवेति । दुष्टव्रणस्येव सदाऽऽतुरस्य रुजाकरस्य अस्य कलेवरस्य कार्यातिशयोपयोगात् अत्यर्थरम्यं प्रतिकारखेदं करोमि इत्यन्वयः ।

दुष्टव्रणस्य दुःखदायिनो विस्फोटकादेरिव सदाऽनिशं आतुरस्य पीडावहस्य सर्वदा मृत्युसन्निहितस्य च, रुजाकरस्य क्लेशहेतोः अस्य कलेवरस्य शरीरस्य, डलयोरैक्यात् मूले 'ड' कारः । कार्यातिशये उत्तमकार्ये अर्थिप्रीणनरूपे उपयोगात् अत्यर्थं यथा स्यात्तथा रम्यं अतिरमणीयं प्रतिकार एव खेदः तं समर्पणात्मकं व्यवसायमिति यावत् करोमि ॥२४॥

इति विनिश्चित्य स महात्मा प्रहर्षोद्गमस्फीतीकृतनयनवदनशोभः स्वं शरीरमुपदर्शयंस्तान्यक्षानुवाच—

महात्मा उदारहृदयः । स्फीतीकृता विकचीकृता विकासिता इति यावत् ।

अमूनि मांसानि सशोणितानि धृतानि लोकस्य हितार्थमेव ।
यद्यातिथेयत्वमुपेयुरद्य महोदयः सोऽभ्युदयो मम स्यात् ॥२५॥

अमूनीति । अमूनि सशोणितानि मांसानि लोकस्य हितार्थमेव ( मया ) धृतानि यदि अद्य ( तानि ) आतिथेयत्व उपेयुः ( तर्हि ) सः मम महोदयः अभ्युदयः स्यात् इत्यन्वयः ।

अमूनि मच्छरीरवर्तीनि सशोणितानि रुधिरान्वितानि, मांसानि लोकस्य अर्थिजनस्य प्रजाजनस्य वा हितार्थे कल्याणायैव मया धृतानि सन्तीति यावत् । यदि अद्य तानि आतिथेयत्वं भवादृश-अतिथिजनोपयोगित्वं उपेयुः प्राप्नुयुः तर्हि सः मम महानुदयो यस्य तथाविधः, अतिप्रशस्यः अभ्युदयः अभ्युन्नतिः स्यात् । इहाऽमुत्र च कृतकृत्यो भवेयमिति भावः ॥२५॥

अथ ते यक्षा जानन्तोऽपि तस्य राज्ञस्तमध्याशयमत्यद्भुतत्वादश्रद्दधाना राजानमूचुः—

अध्याशयं हृद्गतं विस्पष्टं आशयम् ।

अर्थिनात्मगते दुःखे याच्ञादैन्येन दर्शिते ।
ज्ञातुमर्हति दातैव प्राप्तकालमतः परम् ॥२६॥

अर्थिनेति । अर्थिना याच्ञादैन्येन आत्मगते दुःखे दर्शिते सति, दाता एव एव ज्ञातुमर्हति, अतः परं प्राप्तकालम् ( विधीयताम् ) इत्यन्वयः ।

याच्ञादैन्येन दीनतया याचनां विधाय । ज्ञातुमर्हति दुःखमिति शेषः । स्पष्टमन्यत् ॥२६॥

अथ राजाऽनुमतमिदमेषामिति प्रमुदितमनाः सिरामोक्षणार्थं वैद्या आज्ञाप्यन्तामिति समादिदेश । अथ तस्य राज्ञोऽमात्याः स्वमांसशोणित-प्रदानव्यवसायमवेत्य सम्भ्रमामर्षव्याकुलहृदया व्यक्तमीदृशं कञ्चिदर्थं स्नेहवशादूचुः—नाऽर्हति देवः प्रदानहर्षातिशयादनुरक्तानां प्रजानां हिता-ऽहितक्रममनवेक्षितुम् ।

सिराः रक्तवाहिन्यो नाड्यः तासां मोक्षणार्थं मुखोन्मीलनार्थम् । संभ्रमः आवेगः अमर्षो रोषः । हिताहितक्रमं सुख-दुःखस्थितिं अनवेक्षितुं परित्यक्तुम् ।

न चैतदविदितं देवस्य यथा—

यद्यत्प्रजानामहितोदयाय तत्तत्प्रियं मानद ! राक्षसानाम् ।
परोपरोधार्जितवृत्तितुष्टिरेवंस्वभावानघ जातिरेषाम् ॥२७॥

यद्यदिति । हे मानद ! यत् यत् प्रजानां अहितोदयाय तत् तत् राक्षसानां प्रियं ( भवति ), हे अनघ ! परोपरोधार्जितवृत्तितुष्टिः एवंस्वभावा एषां जातिः ( अस्ति ) इत्यन्वयः ।

हे मानद ! मानं ददातीति मानदः तत्सम्बुद्धौ हे मानद ! राजन् ! यत् यत् कर्म प्रजानां प्रजाजनानां अहितस्य अकल्याणस्य दुःखस्य उदयाय भवति तत् तत् कर्म राक्षसानां पिशिताशनानां प्रियं भवतीति शेषः । हे अनघ ! पापरहित ! परेषामन्येषां य उपरोधो बाधः तेन अर्जिता वृत्तितुष्टिः जीवनवृत्तिसंतोषः यया सा एवंस्वभावा ईदृशस्वभावा एषां राक्षसानां जातिरस्तीति शेषः । परापकारैकपराणामेषां समाश्वासनमनुचितमिति भावः ॥२७॥

सुखेष्वसक्तश्च बिभर्षि देव ! राज्यश्रमं लोकहितार्थमेव ।
स्वमांसदानव्यवसायमस्मात्स्वनिश्चयोन्मार्गमिमं विमुञ्च ॥२८॥

सुखेष्विति । हे देव ! ( त्वं ) सुखेष्वसक्तः सन् लोकहितार्थमेव च राज्यश्रमं बिभर्षि, अस्मात् स्वमांसदानव्यवसायं इमं स्वनिश्चयोन्मार्गं विमुञ्च इत्यन्वयः ।

हे देव ! त्वं सुखेषु भोगेष्वसक्तः अनासक्तः सन् लोकहितार्थं लोककल्याणचिकीर्षयैव च राज्यश्रमं राज्यप्रबन्धश्रमं बिभर्षि बिभत्से, अस्मात् प्रजापालनस्य अवश्यकर्तव्यत्वात् स्वमांसदानस्य व्यवसायः व्यापारः, यत्र तं इमं स्वस्य निश्चय एव उन्मार्गः कुमार्गस्तं विमुञ्च त्यज ॥२८॥

असंशयं न प्रसहन्त एत त्वद्वीर्यगुप्तं नरदेवलोकम् ।
अनर्थपाण्डित्यहतास्तथा हि नयेन वाञ्छन्त्यनयं प्रजानाम् ॥२९॥

असंशयमिति । हे नरदेव ! एते त्वद्वीर्यगुप्तं लोकं असंशयं न प्रसहन्ते, तथाहि—अनर्थपाण्डित्यहताः नयेन प्रजानां अनयं वाञ्छन्ति, इत्यन्वयः ।

अयं भावः—हे राजन् ! एते त्वद्रक्षितं प्रजाजनं द्रष्टुमीर्ष्ययाऽसमर्थाः सन्तः इममनर्थावहं व्यवसायं भवदीयामाज्ञामवाप्य चिकीर्षन्ति इति ॥२९॥

मेदोवसाद्यैस्त्रिदशा मखेषु प्रीतिं हुताशाभिहुतैर्व्रजन्ति ।
सत्कारपूतं भवदीयमन्नं सम्पन्नमेषां किल नैव रुच्यम् ॥३०॥

मेद इति । मखेषु हुताशाभिहुतैः मेदोवसाद्यैः त्रिदशाः प्रीतिं व्रजन्ति, सत्कारपूतं भवदीयं अन्नं एषां रुच्यं नैव संपन्नं किलेत्यन्वयः ।

मखेषु यज्ञेषु हुताशे वह्नौ अभिहुतैः मेदोवसाद्यैः पशूनामङ्गैः त्रिदशा देवाः प्रीतिं व्रजन्ति संतुष्टा भवन्ति, देवा अपि यज्ञविषया मांसादि समाददते, एते पुनर्न तथा इति भावः । सत्कारेण आदरेण पूतं पवित्रं सादरमुपहारीकृतं भवदीयं अन्नं भोज्यं एषां राक्षसानां रुच्यं रुचिकरं प्रियमित्यर्थः । नैव संपन्नं नैव जातम् ॥३०॥

कामं नास्मद्विधजनाधेयबुद्धयो देवपादाः स्वकार्यानुरागस्त्वयमस्मानेवमुपचारपथाद् भ्रंशयति । पञ्चानाममीषामर्थे सकलं जगदनर्थीकर्तव्यमिति कोऽयं धर्ममार्गो देवस्य । अपि च । किंकृतेयमस्मास्वेवं निष्प्रणयता केन वाऽस्माकं स्वाम्यर्थे विनियोज्यमानानि विनिगूढपूर्वाणि मांसशोणितानि यदपरिक्षीणेष्वेवामीषु स्वानि देवो दातुमिच्छतीति । अथ स राजा तानमात्यानुवाच—

कामं यद्यपि अस्मद्विधजनाधेयबुद्धयः अस्मद्विधजनोपदेशार्हाः । उपचारपथात् नियममार्गात् । अनर्थीकर्तव्यं विपन्नं कर्तव्यम् । किंकृता = किंहेतुका विनिगूढपूर्वाणि पूर्वं विनिगूढानि परिपोषितानि ।

संविद्यमानं नास्तीति ब्रूयादस्मद्विधः कथम् ।
न दास्यामीत्यसत्यं वा विस्पष्टमपि याचितः ॥३१॥

संविद्यमानमिति । अस्मद्विधः ( जनः ) विस्पष्टं याचितोऽपि संविद्यमानं ( वस्तु ) नास्तीति, न दास्यामीति वा असत्यं कथं ब्रूयात्, इत्यन्वयः ।

अयं भावः—अस्मद्विधः पृथिवीपतिजनः सम्यग् याचितोऽपि विद्यमानं वस्तु नास्तीति, वा न दास्यामि इति वा मिथ्या कठोरं च कथं वक्तुमर्हति ? इति ॥३१॥

धर्मव्यवस्थासु पुरःसरः सन्स्वयं व्रजेयं यदि कापथेन ।
अस्मद्गताचारपथानुगानां भवेदवस्था मम का प्रजानाम् ॥३२॥

धर्मव्यवस्थास्विति। यदि धर्मव्यवस्थासु स्वयं पुरःसरः सन् (अधुना) कापथेन व्रजेयं, (तर्हि) अस्मद्गताचारपथानुगानां मम प्रजानां का अवस्था भवेत्? इत्यन्वयः।

यदि धर्मव्यवस्थासु धर्मनियन्त्रणेषु स्वयं सर्वदा पुरःसरोऽग्रगामी सन् अहं अधुना कापथेन याचकजनप्रत्याख्यानरूपेण कुमार्गेण व्रजेयं गच्छेयं, यदि तथाऽऽचरेयमिति यावत्। तर्हि अस्मद्गतं मद्गतं आचारपथं आचारमार्गं अनुगच्छन्तीति तथाविधानां मम प्रजानां का कतमा अवस्था भवेत्? 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायेन सर्वाः प्रजाः धर्मविमुखाः स्युरिति भावः ॥३२॥

यतः प्रजा एव समीक्षमाणः सारं शरीरादहमुद्धरिष्ये।
कश्च प्रभावो जगदर्थसाधुर्मात्सर्यहार्याल्पहृदो मम स्यात् ॥३३॥

यत इति। यतः प्रजा एव समीक्षमाणः (अहं) शरीरात् सारं उद्धरिष्ये, मात्सर्यहार्याल्पहृदो मम जगदर्थसाधुः कश्च प्रभावः स्यात्? इत्यन्वयः।

यतः प्रजाः प्रजाजनानेव समीक्षमाणः तानेव-धर्मे नियमयिष्यन्नहं, शरीरात् सारं मांसादि उद्धरिष्ये उत्पाट्य एभ्यः प्रदास्यामि, अन्यथा एवमकृते मात्सर्येण एतेषां विषये ईर्ष्यया हार्यं वशीकृतं अल्पमनुदारं हृत् हृदयं यस्य तस्य मम जगतोऽर्थे साधुः जगदर्थसाधुः जगत्कल्याणकारी कश्च प्रभावः स्यात् कःख लु प्रभावो भवति? न कोऽपीति शेषः। जगति अकीर्तिरेव स्यादिति भावः ॥३३॥

यदपि चाऽसमत्प्रेमबहुमानावर्जितं प्रणयविस्रम्भगर्भमभिधीयते भवद्भिः विकृतेदमस्मास्वेवं निष्प्रणयता यदपरिक्षीणेष्वेव नो मांसशोणितेषु स्वानि देवो दातुमिच्छतीति। अत्र वोऽनुनेष्यामि। न खलु मे युष्मासु प्रतिहतविषयः प्रणयमार्गो विस्रम्भविरहात्परिशङ्कागहनदुरवगाहो वा। किन्तु—

प्रणयः प्रेम, विस्रम्भो विश्वासः तदुभयगर्भं यथा स्यात्तथा। अपरिक्षीणेषु असमाप्तेषु। वः युष्मान् अनुनेष्यामि प्रार्थयिष्यामि। प्रतिहतविषयः सप्रतिबन्धः। विस्रम्भेति विश्वासाऽभावात् शङ्काकुलो वा।

धने तनुत्वं क्रमशो गते वा भाग्यानुवृत्त्या क्षयमागते वा।
विजृम्भमाणप्रणयः सुहृत्सु कोऽभ्युदितधनः कृशेषु ॥३४॥

घन इति । घने क्रमशः तनुत्वं गते वा, भाग्यानुवृत्त्या क्षयमागते वा, सति, कृशेषु सुहृत्सु विजृम्भमाणप्रणयः स्फीतघनः न शोभेत इत्यन्वयः ।

अयं भावः—घने शनैः शनैरल्पीभूते, दौर्भाग्यात् सर्वथा वा विलुप्ते सति दरिद्रेषु सुहृत्सु कृतप्रणयो महाधनः न शोभते, अतः भवद्भिः प्रणयो न दर्शनीय इति ॥

विवर्धितेष्वर्थिजनार्थमेव संविद्यमानेषु च मे बृहत्सु ।
गात्रेषु मांसोपचयोन्नतेषु युष्मास्वपि स्यात्प्रणयो विरूपः ॥३५॥

विवर्धितेष्विति । अर्थिजनार्थमेव विवर्धितेषु मांसोपचयोन्नतेषु बृहत्सु मे गात्रेषु च संविद्यमानेषु सत्सु युष्मास्वपि प्रणयः विरूपः स्यात् इत्यन्वयः ।

अर्थिजनसंतोषार्थमेव विवर्धितेषु मांसस्य उपचयेन अभिवृद्धया उन्नतेषु पुष्टेषु बृहत्सु विशालेषु मे मम गात्रेष्वङ्गेषु संविद्यमानेषु वर्तमानेषु सत्स्वपि युष्मासु भवत्स्वपि प्रणयः स्वगात्रदानाय ऽऽज्ञादानं विरूपः विरुद्धः अनुचित इति यावत् । अस्तीति शेषः ॥३५॥

असंस्तुतानामपि न क्षमेय पीडां कथं कैव कथा भवत्सु ।
स्वान्येव मांसानि यतोऽस्मि दित्सुर्मां चैव याचन्त इमे न युष्मान् ॥३६॥

असंस्तुतानामिति । असंस्तुतानां अपि ( जनानां ) पीडां कथं न क्षमेय, भवत्सु कैव कथा, यतः स्वान्येव मांसानि ( अहं ) दित्सुरस्मि, इमे च मां याचन्ते, न ( तु ) युष्मान् ( याचन्ते ) इत्यन्वयः ।

अयं भावः—अपरिचितानां जनानामपि पीडां सोढुमसमर्थोऽहम् । एते च यतो मां याचन्ते ततः मम स्वशरीरदानमेवोचितं, न पुनर्युष्मच्छरीरदानम् । इति ।

तदलमस्मदतिस्नेहाद्धर्मविघ्ननिःसाध्वसतया । अनुचितः खल्वयमत्र भवतामस्मदर्थिषु समुदाचारः । मीमांसितव्यमपि च तावदेतत्स्यात् ।

अत्रभवतां अस्मदर्थिषु अस्माकं याचकेषु समुदाचारः व्यवसायः । एतच्च तावत् मीमांसितव्यं विचिन्तनीयमपीत्यन्वयः ।

स्वार्थमन्नादि दित्सन्तं कथं स्यात्प्रतिषेधयन् ।
साधुवृत्तिरसाधुर्वा प्रागेवेवंविधं विधिम् ॥३७॥

स्वार्थमिति । स्वार्थं अन्नादि दित्सन्तं, प्रागेव एवंविधं विधिं प्रतिषेधयन् ( जनः ) साधुवृत्तिः असाधुर्वा कथं स्यात् ! इत्यन्वयः ।

इत्यस्याऽर्थे स्वार्थे भवादि प्रदेयं वस्तु दित्सन्तं दातुमिच्छन्तं प्रागेव पूर्वमेव एवंविधं विधिं प्रदानव्यापारं प्रतिषेधयन् प्रतिरुन्धन् सतः साधुवृत्तिः सज्जनः असाधुः अनुचितवृत्तिर्वा कथं स्यात् ? असाधुरेवेति भावः ॥३७॥

तदलमनेनाऽत्र वो निर्बन्धेन न्यायोपपरीक्षया क्रियतामस्मत्साचिव्य-सदृशमुन्मार्गावरणं मनसः । अनुमोदनानुगुणवचसः खल्वत्र भवन्तः शोभेरन्नैवमधीरनयनाः कुतः—

निर्बन्धेन आग्रहेण अलं न प्रयोजनम् । अस्मत्साचिव्यसदृशं अनुरूपं मनसः उन्मार्गावरणं असन्मार्गाच्छादनं न्यायोपपरीक्षया न्यायेन दूरी क्रियतामिति तात्पर्यम् ।

नैकोपयोगस्य धनस्य तावन्न प्रत्यहं याचनका भवन्ति ।
एवंविधस्त्वर्थिजनोऽधिगन्तुं न देवताराधनयापि शक्यः ॥३८॥

नैकोपयोगस्येति । एकोपयोगस्य धनस्य तावत् प्रत्यहं याचनका न भवन्ति (इति) न, एवंविधः अर्थिजनस्तु देवताराधनयाऽपि अधिगन्तुं न शक्यः इत्यन्वयः ।

अयं भावः—उदभरणैकप्रयोजनस्य द्रव्यस्य कृते प्रतिवासरं असंख्याः याचकाः आगच्छेयुः, शरीरार्थी याचकस्तु अत्यन्तदुर्लभः स चाद्याऽधिगतो न त्यक्तव्य इति ॥३८॥

एवंविधे चार्थिजनेऽभ्युपेते देहे विनाशिन्यसुखास्पदे च ।
विमर्शमार्गोऽप्यनुदात्तता स्यान्मात्सर्यदैन्यं तु परा तमिस्रा ॥३९॥

एवंविध इति । एवंविधे अर्थिजने च अभ्युपेते, देहे च असुखास्पदे विनाशिनि च सिद्धे, विमर्शमार्गोऽपि अनुदात्तता स्यात्, मात्सर्यदैन्यं तु परा तमिस्रैव भवति इत्यन्वयः ।

एवंविधे शरीरार्थिनि अर्थिजने याचकजने च अभ्युपेते स्वयमागते, देहे स्वशरीरे असुखास्पदे नानाविधदुःखाकरे, विनाशिनि मरणशीले च सिद्धे, विमर्श-मार्गः अधुना विचारावसरोऽपि अनुदात्तता अनुदारहृदयत्वं स्यात्, मात्सर्येण एतेष्वुदितेन दैन्यं दानपराङ्मुखत्वं तु पराऽतिशयवती तमिस्रा रात्रिः अन्धकार एवेति यावत् भवति ॥३९॥

तन्न मा वारयितुमर्हन्त्यत्र भवन्तः इत्यनुनीय स राजा स्वां पर्षद-माहूय वैद्यान्पश्च शिराः स्वशरीरे मोक्षयित्वा तान्यक्षानुवाच—

मा माम् । मोक्षयित्वा उद्धास्य ।

धर्मकर्मणि साचिव्यं प्रीतिं च परमां मम ।
भवन्तः कर्तुमर्हन्ति देयस्यास्य प्रतिग्रहात् ॥४०॥

धर्मकर्मणीति । अस्य देयस्य प्रतिग्रहात् भवन्तः मम धर्मकर्माणि साचिव्यं, परमां प्रीतिं च कर्तुमर्हन्ति इत्यन्वयः ।

अस्य देयस्य शरीरस्य प्रतिग्रहात् स्वीकारात् भवन्तो यक्षाः मम मे धर्मकर्मणि दानरूपे साचिव्यं अनुमन्तृत्वात्, परमां अधिकां प्रीतिं मुदं च कर्तुमर्हन्ति । एतत् खलु स्वशरीरभक्षणाय अनुज्ञादानम् ॥४०॥

ते तथेत्युक्त्वाऽञ्जलिपुटैरेव राज्ञो रक्तचन्दनरसाभिताम्रं रुधिरं पातुमुपचक्रमिरे ।

रक्तचन्दनरसः द्रवः तद्वत् अभिताम्रं ताम्रवर्णम् । उपचक्रमिरे आरेभिरे ।

स पीयमानक्षतजः क्षितीशः क्षपाचरैर्हेमवपुश्चकाशे ।
सन्ध्यानुरक्तैर्जलभारनम्रैः पयोधरैर्मेरुरिवोपगूढः ॥४१॥

स इति । क्षपाचरैः पीयमानक्षतजः हेमवपुः सः क्षितीशः सन्ध्यानुरक्तैः जलभारनम्रैः पयोधरैः उपगूढः मेरुरिव चकाशे इत्यन्वयः ।

क्षपाचरैः निशाचरैः तैः यक्षैः पीयमानमास्वाद्यमानं क्षतजं रुधिरं यस्य सः हेमवत् उज्ज्वलं सौवर्णवर्णोज्ज्वलं वपुः यस्य सः क्षितीशः नृपाकः, सन्ध्यायां सायङ्काले अनुरक्तैः रागताम्रैः जलभारेण नम्रैरघो विलम्बमानैश्च पयोधरैः मेघैः उपगूढः आलिङ्गितः परिवेष्टितः मेरुः सुवर्णपर्वत इव चकाशे दिदीपे । उपमालङ्कारः ॥४१॥

प्रीतिप्रकर्षाद्धृतिसम्पदा च वपुर्गुणादेव च तस्य राज्ञः ।
मम्लौ न गात्रं न मुमूर्छ चेतः संचिक्षिपे न क्षतजं क्षरद्वा ॥४२॥

प्रीतिप्रकर्षादिति । तस्य राज्ञः प्रीतिप्रकर्षात् धृतिसम्पदा च वपुर्गुणादेव च गात्रं न मम्लौ, चेतः न मुमूर्छ, क्षरत् क्षतजं वा न संचिक्षिपे इत्यन्वयः ।

तस्य राज्ञो मैत्रबलस्य प्रीतेः अर्थिजनप्रणयस्य प्रकर्षात् उद्रेकात्, धृतिः धैर्यं तस्य सम्पदा च वपुर्गुणादेव च स्वाभाविकशरीरगुणादेव वा गात्रं शरीरं न मम्लौ म्लानं नाऽभवत्, चेतः चित्तं न मुमूर्छ मोहाकुलं नाऽभूत्, क्षरत् स्रवत् क्षतजं

शोणितं वा न संचिक्षिपे न संक्षितमभूत् न शुष्कमभूत्, अनवरतं प्रससार एवेति यावत् ॥४२॥

विनीततर्षक्लमास्तु ते यक्षाः पर्याप्तमनेनेति राजानमूचुः—

विनीततर्षक्लमाः = अपनीततृष्णाऽऽयासाः। अनेन रुधिरपानेन पर्याप्तं अलम्।

अनेकदुःखायतने शरीरे सदा कृतघ्नेऽपि नराधिपस्य।
गतेऽर्थिसम्माननसाधनत्वं हर्षानुकूलं ग्रहणं बभूव ॥४३॥

अनेकेति। अनेकदुःखायतने सदा कृतघ्नेऽपि शरीरे अर्थिसम्माननसाधनत्वं गते (सति) नराधिपस्य हर्षानुकूलं ग्रहणं बभूव इत्यन्वयः।

अनेकदुःखायतने नानाक्लेशावहे सदा कृतघ्नेऽपि भोगपरायणतया कटुपरिणामेऽपि शरीरे स्वविग्रहे अर्थिजनानां सम्माननसाधनत्वं संतोषसाधनतां गते सति नराधिपस्य राज्ञः हर्षानुकूलं सहर्षं ग्रहणं मनोवृत्तिर्बभूव ॥४३॥

अथ स राजा हर्षप्रबोधादधिकतरनयनवदनप्रसादो नीलोत्पलदलनीलविमलपत्रं रत्नप्रभोद्भासुररुचिरत्सरुं निशितं निस्त्रिंशमादाय स्वमांसानि छित्त्वा तेभ्यः प्रायच्छत्।

नीलोत्पलवत् नीलेन्दीवरवत् विमलं पत्रमसिधारा यस्य तत्। रत्नप्रभाभिः रत्नकान्तिभिः उद्भासुरः उज्ज्वलः रुचिरश्च त्सरुः खड्गमुष्टिस्थानं यस्य तम्। निस्त्रिंशं खड्गम्।

ह्रियमाणावकाशं तु दानप्रीत्या पुनः पुनः।
न प्रसेहे मनस्तस्य च्छेददुःखं विगाहितुम् ॥४४॥

ह्रियमाणेति। पुनः पुनः दानप्रीत्या ह्रियमाणावकाशं तस्य मनः तु च्छेददुःखं विगाहितुं न प्रसेहे इत्यन्वयः।

पुनः पुनः दानप्रीत्या भूयो भूयः प्रवृद्धया दानवाञ्छया ह्रियमाणोऽ ह्रियमाणोऽवकाशोऽन्तःप्रदेशः यस्य तत् दानवाञ्छैकतानं तस्य राजर्षेः मनस्तु च्छेदस्य स्वशरीरकृन्तनस्य दुःखं पीडां विगाहितुं बोद्धुं अनुभवितुं न प्रसेहे न समर्थमभूत्।

आकृष्यमाणं शितशस्त्रपातैः प्रीत्या पुनर्दूरमपास्यमानम्।
खेदालसत्यादिव तस्य दुःखं मनः समुत्सर्पणमन्दमासीत् ॥४५॥

आकृष्यमाणमिति । शितशस्त्रपातैः आकृष्यमाणं, प्रीत्या पुनः दूरं अपास्यमानं तस्य दुःखं खेदालसत्वादिव मनःसमुत्सर्पणमन्दं आसीत् इत्यन्वयः ।

शितशस्त्रपातैः तीक्ष्णशस्त्राऽभिघातैः आकृष्यमाणं आकृष्य अनुभवगोचरीक्रियमाणं, प्रीत्या दानप्रीत्या पुनः दूरं अपास्यमानं दूरं निरस्यमाणं तस्य राज्ञः तत् शस्त्राऽभिघातादिजं दुःखं खेदेन उभयतः आन्दोलनजनितेन अलसं मन्दं तस्य भावः तस्मादिव हेतोः मनःपर्यन्तं यत्समुत्सर्पणं गमनं तत्र मन्दं शिथिलं आसीत् दानप्रेमातिशयेन शस्त्रघातजनितं दुःखमपि नाऽन्वभूदिति भावः । हेतूत्प्रेक्षालङ्कारः ॥४५॥

स प्रीतिमानेव निशाचरांस्तान्सन्तर्पयन्स्वैः पिशितैस्तथाऽऽसीत् ।
क्रूराणि तेषामपि मानसानि येनासुराविष्कृतमार्दवानि ॥४६॥

स इति । तान् निशाचरान् स्वैः पिशितैः संतर्पयन् सः तथा प्रीतिमान् एव आसीत्, येन क्रूराणि अपि तेषां मानसानि आविष्कृतमार्दवानि आसुः इत्यन्वयः ।

तान् निशाचरान् यक्षान् स्वैः पिशितैः मांसैः संतर्पयन् भोजयन् सः राजा तथा तादृक् प्रीतिमान् प्रसन्नवदन एव आसीत्, येन तस्याऽऽचरणेन क्रूराणि अपि निसर्गकठोराण्यपि तेषां मानसानि चेतांसि आविष्कृतं प्रकटीकृतं मार्दवं मृदुता यैस्तानि तथाविधानि आसुः अभूवन् ॥४६॥

धर्मप्रियत्वात्करुणावशाद्वा त्यजन्परार्थे प्रियमात्मदेहम् ।
द्वेषाग्निदग्धान्यपि मानसानि प्रसादसौवर्ण्यनवानि कुर्यात् ॥४७॥

धर्मप्रियत्वादिति । धर्मप्रियत्वात् करुणावशात् वा परार्थे प्रियं आत्मदेहं त्यजन् (जनः) द्वेषाग्निदग्धानि, मानसान्यपि प्रसादसौवर्ण्यनवानि कुर्यात् इत्यन्वयः ।

धर्मप्रियत्वात् नितान्तं धार्मिकत्वात्, करुणावशात् वा दीनाऽऽपन्नमूढेषु सहजाऽनुकम्पाशालित्वात् वा, परार्थे परोपकाराय प्रियं अतिशयेन प्रियमपि आत्मदेहं स्वशरीरं त्यजन् तृणमिव परित्यजन् (दयालुर्जनः) द्वेषाग्निदग्धानि वैरावेशभस्मीकृतानि मानसानि दुर्जनचेतांस्यपि, प्रसादः प्रसन्नता तेन यत् सौवर्ण्यं सुवर्णस्य भावः सौवर्ण्यं निर्मलत्वं तेन नवानि अभिनवानि हर्षविकसितानीति यावत् कुर्यात् ॥४७॥

अथ ते यक्षास्तं राजानं स्वमांसोत्कर्तनपरं तथैवास्खलितवदनप्रसाद-

अविकम्प्यमानं मांसच्छेदवेदनाभिरभिवीक्ष्य परं प्रसादं विस्मयञ्चो-पजग्मुः ।

उत्कर्तनं च्छेदनम् । अस्खलितः अविनष्टः वदनप्रसादो मुखविकासो यस्य तम् ।

आश्चर्यमद्भुतमहो बत किंस्विदेतत्सत्यं न वेति समुदीर्णविचारहर्षाः ।
राजन्यमर्षमपमृद्य मनःप्रसादं तत्संस्तुतिप्रणतिभिः प्रथयाम्बभूवुः ॥४८॥

आश्चर्यमिति । अहो अद्भुतं आश्चर्यं बत एतत् किंस्वित् सत्यं न वा इति समुदीर्णविचारहर्षाः ( ते यक्षाः ) राजनि अमर्षं अपमृद्य, तत्संस्तुतिप्रणतिभिः मनःप्रसादं प्रथयाम्बभूवुः इत्यन्वयः ।

अहो विस्मयः अद्भुतं विचित्रमिदं स्वशरीरोत्कर्तनरूपं कृत्यं आश्चर्यं आश्चर्य-कारि, बतेत्याश्चर्ये । 'अहो' 'बत' इति निपातद्वयं आश्चर्यातिशयद्योतनाय । एतत् पुरोवर्ति राज्ञश्चरितं किंस्वित् सत्यं न वा किंनु सत्यमुत असत्यं इन्द्रजालतुल्यं वा, इति समुदीर्णः उत्पन्नः विचारो वितर्कः हर्षश्च येषां ते । ते यक्षाः राजनि अमर्षं रोषमपमृद्य, अपसार्य, दूरीकृत्य, तस्य राजर्षेः संस्तुतिभिः स्तवैः, प्रणतिभिः प्रणा-मादिभिश्च स्वमनसः प्रसादं नैर्मल्यं प्रथयांबभूवुः प्रकटीचक्रुः ॥४८॥

अलमलं देव ! विरम्यतां स्वशरीरपीडाप्रसङ्गात् । सन्तर्पिताः स्मस्तवानयाद्भुतया याचकजनमनोहरया प्रतिपत्त्येति ससम्भ्रमाः सप्र-णामं विनिवार्य राजानं प्रसादाश्रुपरिषिक्तवदनाः सबहुमानमुदीक्षमाणाः पुनरूचुः—

याचकजनमनोहरया याचकहृदयहारिण्या प्रतिपत्त्या समानतया ।

स्थाने भक्तिवशेन गच्छति जनस्त्वत्कीर्तिवाचालतां
स्थाने श्रीः परिभूय पङ्कजवनं त्वत्संश्रयश्लाघिनी ।
व्यक्तं शक्रसनाथतामपि गता त्वद्वीर्यगुप्तामिमां
द्यौः पश्यत्युदितस्पृहा वसुमतीं नो चेदहो वञ्च्यते ॥४९॥

स्थान इति । जनः भक्तिवशेन त्वत्कीर्तिवाचालतां गच्छति ( इति ) स्थाने, श्रीः पङ्कजवनं परिभूय त्वत्संश्रयश्लाघिनी (जाता) (इति) स्थाने, (किञ्च) शक्रस-नाथतां गताऽपि द्यौः त्वद्वीर्यगुप्तामिमां वसुमतीं उदितस्पृहा ( सती ) नो चेत्पश्यति ( तर्हि ) अहो व्यक्तं वञ्च्यत एव इत्यन्वयः ।

जनः सकलः प्रजाजनः भक्तिः पूज्येष्वनुरागः तद्वशेन त्वत्कीर्त्या त्वत्कीर्तिगानेन वाचालतां मुखरत्वं गच्छति, इति स्थाने युक्तमेतत् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । श्रीः लक्ष्मीः पङ्कजवनं स्वनिवासभवनं कमलवनं परिभूय तिरस्कृत्य, त्वमेव संश्रयः आश्रयः तं श्लाघते इति तथाविधा त्वदुपाश्रया जाता इति स्थाने युक्तम् । किञ्च—शक्रेण इन्द्रेण सनाथतां सस्वामिकतां गताऽपि इन्द्रपालिताऽपि द्यौः स्वर्लोकः त्वद्वीर्येण तव बलेन गुप्तां रक्षितां इमां वसुमतीं पृथ्वीं उदितस्पृहा उदितश्लाघा सती नो चेत् पश्यति न यदि अवलोकयति, तर्हि अहो व्यक्तं स्फुटं दैवेन पञ्च्यते वंचिता भवतीति यावत् । देवेन्द्रस्पृहणीया खलु तावकीना गुणावलिरिति भावः । 'द्यौः सस्पृहं पश्यति' इति स्त्रीलिङ्गसाम्यात् समासोक्ति अलङ्कारः अतिशयोक्तिश्च ॥४९॥

किम्बहुना, एवंविधजनाभ्युपपन्नः सभाग्यः खलु मनुष्यलोकः युष्मदायासाभ्यनुमोदनात्तु वय मेवाऽत्र दग्धाः । भवद्विधजनापश्रया-च्छक्यमित्थङ्गतैरप्यात्मानं समुद्धर्तुमिति स्वदुष्करप्रतीघाताश्रया भवन्तं पृच्छामः ।

एवंविधेन लोकोत्तरेण जनेन पुरुषेण अभ्युपपन्नः युक्तः युष्माकं भवतां च आयासः स्वशरीरोत्कर्तनरूपः । स्वस्य स्वात्मनः दुष्करः कर्तुमशक्यः यः प्रतीघातः शरीरोच्छेदनरूपः तत्र आशयो जिज्ञासा येषां ते वयमित्यर्थः ।

अनादृत्य सुखप्राप्तामनुरक्तां नृपश्रियम् ।
किं तदत्यद्भुतं स्थानं पथाऽनेन यदीप्ससि ॥५०॥

अनादृत्येति । सुखप्राप्तां अनुरक्तां नृपश्रियं अनादृत्य, अनेन पथा यत् ईप्ससि अत्यद्भुतं तत् स्थानं किं ? इत्यन्वयः ।

अयं भावः—राज्यश्रियमपि अतिशयानां कां नाम गतिं समवाप्तुं एवंविधोऽतिदुष्करः त्यागः भवता क्रियते इति ॥५०॥

सर्वक्षितिपतित्वं नु धनेशत्वमथेन्द्रताम् ।
ब्रह्मभूयं विमोक्षं वा तपसाऽनेन वाञ्छसि ॥५१॥

तदेव विकल्पगर्भं पृच्छति—सर्वक्षितिपतित्वमिति । सर्वक्षितिपतित्वं नु, धनेशत्वं इन्द्रतां वा, ब्रह्मभूयं विमोक्षं वा अनेन तपसा वाञ्छसि ? इत्यन्वयः ।

सर्वक्षितिपतित्वं चक्रवर्तित्वं, ब्रह्मभूयं ब्रह्मीभावरूपं विमोक्षं कैवल्यं, स्पष्टमन्यत् ॥५१॥

अस्य हि व्यवसायस्य न दूरतरमीप्सितम् ।
श्रोतव्यं चैतदस्माभिर्वक्तुमर्हति नो भवान् ॥५२॥

अस्येति । अस्य हि व्यवसायस्य ईप्सितं दूरतरं न, एतत् च अस्माभिः श्रोतव्यं, ( यदि ) भवान् नो वक्तुमर्हति इत्यन्वयः ।

अस्य हि महतः त्यागात्मनः व्यवसायस्य कर्मणः फलरूपं ईप्सितं भवतोऽभीष्टं दूरतरं न, न चिरभावि, एतच्च ईप्सितं अस्माभिः श्रोतव्यं यदि श्रोतुं योग्यं भवेत् तदा भवान् नोऽस्मान् वक्तुं कथयितुमर्हति ॥५२॥

राजोवाच—श्रूयतां यदर्थोऽयं ममाभ्युद्यमः ।

यदर्थः यत्प्रयोजनः ।

प्रयत्नलभ्या यदयत्ननाशिनी न तृप्तिसौख्याय कुतः प्रशान्तये ।
भवाश्रया सम्पदतो न कामये सुरेन्द्रलक्ष्मीमपि किन्वथेतराम् ॥५३॥

प्रयत्नलभ्येति । यत् प्रयत्नलभ्या अयत्ननाशिनी भवश्रिया सम्पत् तृप्तिसौख्याय न ( भवति ) प्रशान्तये कुतः ? अतः सुरेन्द्रलक्ष्मीं अपि न कामये अथ इतरां किंतु ( कामये ) इत्यन्वयः ।

यत् यतः प्रयत्नैः नानाविधैः नानाविधैः प्रयत्नैः लभ्याऽधिगम्या, पुनः अयत्नेन क्षणादिव नश्यतीति तथाविधा भवाश्रया सांसारिकी सम्पत् सम्पत्तिः तृप्तिसौख्याय भोगतृप्त्यर्थं एव न भवति प्रशान्तये चेतः प्रशान्तये तु कुतः कस्मात् भवेत् ? नैवेति भावः । 'न जातु कामः कामानामुपभोगेन शाम्यति' इत्युक्तेः । अतः सुरेन्द्रलक्ष्मीं दैवीं सम्पदमपि न कामये, अथ इतरां मानुषीं राज्यश्रियं किंतु कामये ? किमित्यभिलषामि ? नैवेति यावत् । 'सर्वक्षितिपतित्वं नु' इत्यस्योत्तरमेतत् ॥७३॥

न चाऽऽत्मदुःखक्षयमात्रकेण मे प्रयाति सन्तोषपथेन मानसम् ।
अमूननाथानभिवीक्ष्य देहिनः प्रसक्ततीव्रव्यसनश्रमातुरान् ॥५४॥

न चेति । अमून् अनाथान् प्रसक्ततीव्रव्यसनश्रमातुरान् देहिनः अभिवीक्ष्य, आत्मदुःखक्षयमात्रकेण च सन्तोषपथेन मे मानसं न प्रयाति इत्यन्वयः ।

अयं भावः—विविधव्यसनव्यस्तान् देहिनो दृष्ट्वा आत्मदुःखापायमात्रेण नाऽहं संतुष्यामि, किन्तु तेषां क्लेशनिवारणमपि मदीयं कर्तव्यमेव ॥५४॥

अनेन पुण्येन तु सर्वदर्शितामवाप्य निर्जित्य च दोषविद्विषः ।
जरा-रुजा मृत्युमहोर्मिसङ्कुलात्समुद्धरेयं भवसागराज्जगत् ॥५५॥

अनेनेति । अनेन पुण्येन तु सर्वदर्शितामवाप्य, दोषविद्विषश्च निर्जित्य जरा-रुजामृत्युमहोर्मिसङ्कुलात् भवसागरात् जगत् समुद्धरेयम्, इत्यन्वयः । अनेन पुण्येन तु अनेन शरीरत्यागादिरूपेण पुण्येन कर्मणा तु सर्वदर्शितां सर्वज्ञत्वं बुद्धत्वं अवाप्य, दोषाः लोभक्रोधादयस्त एव विद्विषः शत्रवस्तान् निर्जित्य तिरस्कृत्य च, जरावार्धक्यं, रुजा पीडा, मृत्युर्मरणं एत एव महोर्मयस्तरङ्गाः तैः सङ्कुलात् अभिव्याप्तात् भवसागरात् संसारसिन्धोः जगत् भुवनं समुद्धरेयं समुद्धरिष्यामि ॥५५॥

अथ ते यक्षाः प्रसादसंहर्षिततनुरुहाः प्रणम्य राजानमूचुः । उपपन्न-रूपमेवंविधस्य व्यवसायातिशयस्येदं कर्म । तन्न दूरे भवद्विधानामभि-प्रायसम्पद् इति निश्चितमनसो विज्ञापयामः ।

उपपन्नरूपं युक्तरूपम् । निश्चितमनसः निश्चितधियः ।

कामं लोकहितायैव तव सर्वोऽयमुद्यमः ।
स्वहितात्यादरं त्वेषां स्मर्तुमर्हसि नस्तदा ॥५६॥

काममिति । तव कामं लोकहिताय एव सर्वोऽयमुद्यमः ( अस्ति ) एषां नः, स्वहितात्यादरं तु तदा ( त्वं ) स्मर्तुमर्हसि इत्यन्वयः ।

तव कामं यथेच्छं अतिशयेन लोकानां हिताय कल्याणाय एव सर्वोऽयं त्याग-रूपः उद्यमः उद्योगः अस्तीति शेषः । एषां नः स्वहिते भक्ष्ययाचनरूपे अत्यादरं अत्याग्रहं तु तदा समये समये त्वं स्मर्तुमर्हसि स्मरिष्यसि । तवायं त्यागवृत्तान्तः स्मरणीयो भविष्यतीति तात्पर्यम् ॥५६॥

अज्ञानाच्च यदस्माभिरेवमायासितो भवान् ।
स्वमप्यर्थमपश्यद्भिर्मृष्यतामेव तच्च नः ॥५७॥

स्वमप्यर्थमपश्यद्भिर्मृष्यतामेव तच्च नः ॥५७॥ अपश्यद्भिः अस्माभिः यत् भवान् 

अज्ञानामिति । अज्ञानाच्च स्वं अर्थं अपि अपश्यद्भिः अस्माभिः यत् भवान् एवमायासितः ( अभूत् ) तत् च नः ( कृत्यं ) मृष्यतामेव इत्यन्वयः ।

अयं भावः—अज्ञानवशात्स्वकल्याणपराङ्मुखैरप्यस्माभिर्यदेवं भवान् पीडितः सोऽयमप्यपराधः क्षम्यताम् इति ॥५७॥

आज्ञामपि च तावन्नस्त्वमनुग्रहपद्धतिम् ।
सचिवानामिव स्वेषां विस्रब्धं दातुमर्हसि ॥५८॥

आज्ञामिति । त्वं अनुग्रहपद्धति आज्ञामपि च तावत् स्वेषां सचिवानां इव नः विस्रब्धं दातुमर्हसि इत्यन्वयः ।

अयं भावः—स्वसचिवान् इव कामं भवद्विधेयान् नः कार्येष्वाज्ञापयितुमर्हसि इति ॥५८॥

अथ स राजा प्रसादमृदूकृतहृदयान्मस्त्वैनानुवाच—

उपकारः खल्वयं नायासो ममेत्यलमत्र वोऽक्षमाशङ्कया, अपि च—
अक्षमा क्षमाया अभावः रोषः तदाशङ्कयाऽलम् ।

एवंविधे धर्मपथे सहायान्किं विस्मरिष्याम्यधिगम्य बोधिम् ।
युष्माकमेव प्रथमं करिष्ये विमोक्षधर्मामृतसंविभागम् ॥५९॥

एवंविध इति । एवंविधे धर्मपथे सहायान् ( वः ) बोधिं अधिगम्य विस्मरिष्यामि किं ? युष्कमेव प्रथमं विमोक्षधर्माऽमृतसंविभागं करिष्ये इत्यन्वयः ।

एवंविधे धर्मपथे धर्ममार्गे सहायान् सहायकान् वः बोधिं सम्यग् ज्ञानानुभवरूपां अधिगम्य लब्ध्वाऽपि विस्मरिष्यामि किं ? नैवेति शेषः । युष्माकमेव प्रथमं विमोक्षधर्मः मुक्तिः कैवल्यं वा तदेव अमृतं पीयूषं तस्य संविभागं यथाभागशो वितरणं करिष्ये करिष्यामि । मोक्षकालेऽपि युष्माकमुपकारं स्मृत्वा मोक्षपदवीमपि विभज्य दास्यामि इति भावः ॥५९॥

अस्मत्प्रियं चाभिसमीक्षमाणैर्हिंसा भवद्भिर्विषवद्विवर्ज्या ।
लोभः परद्रव्यपरिग्रहेषु ! वाग्गर्हिता मद्यमयश्च पाप्मा ॥६०॥

अस्मदिति । अस्मत्प्रियं च अभिसमीक्षमाणैः भवद्भिः हिंसा विषवत् विवर्ज्या, परद्रव्यपरिग्रहेषु लोभ, गर्हितावाक्, मद्यमयः पाप्मा च ( विवर्ज्यः ) इत्यन्वयः ।

अस्मत्प्रियं अस्मदनुकूलं कार्यं च अभिसमीक्षमाणैः कर्तुं वाञ्छद्भिः भवद्भिः हिंसा परप्राणविघातः विषवत् विवर्ज्या वर्जनीया, परद्रव्यपरिग्रहेषु परद्रव्याहरणेषु

लोभः आसक्तिः विवर्ज्या, एवं गर्हिता कुत्सिता निन्दिता वा वाक् वाणी विवर्ज्या, मद्यमयः, मादकत्वान्मद्यतुल्यः पाप्मा पापकर्म च विवर्जनीयम् । सदाचरणपरतया मम सन्तोषः, अस्माकं सख्यं च भवितेति भावः ॥६०॥

अथ ते य क्षास्तथेत्यस्मै प्रतिश्रुत्य प्रणम्य प्रदक्षिणीकृत्य चैनं तत्रैवाऽन्तर्दधिरे । स्वमांसशोणितप्रदाननिश्चयसमकालमेव तु तस्य महासत्त्वस्य ।

प्रतिश्रुत्य प्रतिज्ञाय । अन्तर्दधिरे अन्तर्हिता अभूवन् । महासत्वस्य महाप्राणस्य राजर्षेः ।

विकम्पमाना बहुधा वसुन्धरा विघूर्णयामास सुवर्णपर्वतम् ।
प्रसस्व नुर्दुन्दुभयश्च तद्गता द्रुमाश्च पुष्पं ससृजुर्विकम्पनात् ॥६१॥

विकम्पमानेति । बहुधा विकम्पमाना वसुन्धरा सुवर्णपर्वतं विघूर्णयामास, तद्गताः दुन्दुभयश्च प्रसस्वनुः, विकम्पनात् द्रुमाश्च पुष्पं ससृजुः इत्यन्वयः ।

बहुधा भूयो भूयो विकम्पमाना आन्दोलिता वसुंधरा पृथ्वी सुवर्णपर्वतं सुमेरुपर्वतं विघूर्णयामास भ्रामयामास, तद्गताः सुवर्णपर्वतगताः देवानां दुन्दुभयः भेर्यश्च प्रसस्वनुः दध्वनुः, विकम्पनात् आकम्पनात् द्रुमाश्च कल्पद्रुमादयश्च पुष्पं पुष्पसंघं ससृजुः पातयामासुः ॥६१॥

तदभ्रवद्व्योमनि मारुतेरितं पतत्रिसेनेव वितानवत्कचित् ।
विसृत्य माला ग्रथितेव कुत्रचित्समं समन्तान्नृपतेर्व्यकीर्यत ॥६२॥

तदिति । मारुतेरितं तत् व्योमनि (क्वचित्) अभ्रवत् पतत्रिसेनेव क्वचित् क्वचित् वितानवत् कुत्रचित् विसृत्य ग्रथिता मालेव, समं नृपतेः समन्तात् व्यकीर्यत इत्यन्वयः ।

मारुतेन वायुनेरितं तत् पुष्पं पुष्पसमूहः व्योमनि आकाशे क्वचित् अभ्रवत् मेघवत् 'अभ्रं मेघो वारिवाहः' इत्यमरः । पतत्रिसेनेव क्वचित्, पक्षिणां नानावर्णानां पंक्तिरिव च क्वचित्, क्वचित् पुनः वितानवत् उल्लोचवत् कुत्रचित् च विसृत्य प्रसार्य ग्रथिता गुम्फिता मालेव स्रगिव च समं एककाले नृपते राज्ञः समन्तात् परितः व्यकीर्यत विकीर्णमभूत् ॥६२॥

निवारयिष्यन्निव मेदिनीपतिं समुद्धतावेगतया महार्णवः ।
जलैः प्रकृत्यर्यधिकक्रमस्वनैः प्रयाणसौत्सुकवपुर्व्यरोचत ॥६३॥

निवारयिष्यन्निति । समुद्धताऽऽवेगतया मेदिनीपतिं निवारयिष्यन्निव, प्रकृत्यभ्यधिकक्रमस्वनैः जलैः प्रयाणसौजस्कवपुः महार्णवः व्यरोचत इत्यन्वयः ।

समुद्धतः अभिवृद्धः आवेगः रंहः यस्य तस्य भावः समुद्धतावेगता तया मेदिनीपतिं राजानं निवारयिष्यन्निवारयितुकाम इव प्रकृतिः निसर्गः ततोऽपि अभ्यधिकक्रमाः स्वनाः निर्घोषा येषां तैस्तैः महाध्वनिभिः जलैः जलभरैः प्रयाणे नृपतिसन्निधौ प्रयाणे सौजस्कं ओजसा सहितं वपुः यस्य सः तथाविधः ससंभ्रम इव महार्णवः समुद्रः व्यरोचत व्यराजत ॥६३॥

किमेतदित्यागतसम्भ्रमस्ततः सुराधिपस्तत्र विचिन्त्य कारणम् ।
नृपात्ययाशङ्किततूर्णमाययौ नृपालयं शोकभयाकुलाकुलम् ॥६४॥

किमेतदिति । ततः सुराधिपः किमेतत् इत्यागतसंभ्रमः तत्र कारणं विचिन्त्य, नृपात्ययाशङ्किततूर्णं शोकभयाऽऽकुलाकुलं नृपालयं आययौ इत्यन्वयः ।

ततः एवंविधोत्पातप्रादुर्भावे सति सुराधिपः देवेन्द्रः किमेतत् एतत् सर्वं किंहेतुकमिति प्रथमं आगतसंभ्रमः संभ्रमान्वितः तत्र तथाविधे क्षोभे कारणं विचिन्त्य ज्ञात्वा, नृपस्य अत्ययेन अपायेन आशङ्किततूर्णं तूर्णमाशङ्कितं शोकभयाभ्यां आकुलाकुलं अतिशयेन आकुलं, नृपालयं राजसदनं आययौ आगतवान् ॥

तथागतस्याऽपि तु तस्य भूपतेर्मुखप्रसादात्सविशेषविस्मयः ।
उपेत्य तत्कर्म मनोज्ञया गिरा प्रसादसंहर्षवशेन तुष्टुवे ॥६५॥

तथागतस्येति । तथागतस्याऽपि तु तस्य भूपतेः मुखप्रसादात् सविशेषविस्मयः (शक्रः) उपेत्य, मनोज्ञया गिरा प्रसादसंहर्षवशेन तत्कर्म तुष्टुवे इत्यन्वयः ।

अयं भावः—इन्द्रः बोधिसत्वं राजरूपेण वसन्तं ज्ञात्वाऽपि तदीयमुखविकासादिना संजातविस्मयः मधुरया वाचा तदीयमवदानं प्रशशंस इति ॥६५॥

अहो प्रकर्षो बत सज्जनस्थितेरहो गुणाभ्यासनिवेरुदारता ।
अहो परानुग्रहपेशला मतिस्त्वदर्पणान्नाथवती बत क्षितिः ॥६६॥

तान्येव प्रशंसावाक्यान्याह—अहो इति । अहो सज्जनस्थितेः प्रकर्षः बत, अहो गुणाभ्यासनिवेः उदारता, अहो परानुग्रहपेशला मतिः, त्वदर्पणात् क्षितिः नाथवती बत इत्यन्वयः ।

अहो इत्याश्चर्ये प्रशंसायां च सज्जनस्थितेः साधुजनमर्यादायाः प्रकर्षः उत्कर्षः बत, अहो गुणाभ्यासनिधेः सद्गुणराशेः उदारता उदारहृदयत्वम् । अहो परानुग्रहे पेशला कोमला कृपार्द्रा मतिर्बुद्धिः, त्वदर्पणात् त्वया पालितत्वात् क्षितिः नाथवती राजन्वती वर्तेत्याश्चर्ये प्रशंसने च । सर्वत्र अस्ति इत्यध्याहार्यम् ॥६६॥

इत्यभिप्रशस्यैनं शक्रो देवेन्द्रः सद्यःक्षतरोहणसमर्थैर्दिव्यैर्मानुष्यकैरौषधिविशेषैर्निर्वणं यथापौराणं शरीरं कृत्वा दाक्षिण्यविनयोपचारमधुरं प्रतिपूजितस्तेन राज्ञा स्वमावासं प्रतिजगाम ॥

तदेवं परदुःखातुरा नात्मसुखमवेक्षन्ते महाकारुणिका इति । को नाम धनमात्रकेऽप्यपेक्षां नोत्स्रष्टुमर्हतीति दायकजनसमुत्तेजनायां वाच्यम् । करुणावर्णेऽपि तथागतमाहात्म्ये सत्कृत्य धर्मश्रवणे च । यच्चोक्तं भगवता बहुकराः खल्वेते पञ्चका भिक्षव इति स्यादेतत्सन्धाय । तेन हि समयेन ते पञ्च यक्षा बभूवुः । तेषां भगवता यथा प्रतिज्ञातमेव प्रथमं धर्मामृतसंविभागः कृतः ।

❀ इति मैत्रीबलजातकम् ❀

सद्यः क्षतानां मांसोत्कर्तनस्थानानां रोहणे आपूरणे समर्थैः । यथा पौराणं पूर्ववत् । प्रतिपूजितः सत्कृतः । को नामेति अयं भावः—दातृजनानुत्साहयित्वा को नाम धनादि न जिघृक्षन्ति ? । करुणामये भगवतो बुद्धस्य माहात्म्ये, धर्मोपदेशानुसंधाने च कृतादराः अल्पा एव भिक्षवो भवन्ति । उक्तं भगवता बोधिसत्वेन । बहुकराः बहुयाचकाः पञ्च एव पंचकाः भिक्षवः । एतत्संधाय यक्षकथां स्मृत्वा । धर्मामृतसंविभागः धर्मपीयूषदानम् ॥

❀ इति मैत्रीबलजातकम् ❀

## अथ यज्ञजातकम् ।

न कल्याणाशयाः पापप्रतारणामनुविधीयन्त इत्याशयशुद्धौ प्रयतितव्यम् । तद्यथानुश्रूयते । बोधिसत्त्वः किल स्वपुण्यप्रभावोपनतामानतसर्वसामन्तां प्रशान्तस्वपरचक्राद्युपद्रवत्वादकण्टकामसपत्नामेकातपत्रां दायाद्यक्रमागतां पृथिवीं पालयामास ।

कल्याणाशयाः लोककल्याणकाङ्क्षिणः पापप्रतारणां पापकर्मरूपां वञ्चनां न अनुविधीयन्ते न कुर्वन्ति । आशयशुद्धौ हृदयशुद्धौ । स्वचक्रं स्वराष्ट्रं, परचक्रं शत्रुराष्ट्रम् । दायाद्यक्रमागतां वंशपरम्परागताम् ।

नाथः पृथिव्याः स जितेन्द्रियारिर्भुक्तावगीतेषु फलेष्वसक्तः ।
प्रजाहितेष्वाहितसर्वभावो धर्मैककार्यो मुनिवद्बभूव ॥ १ ॥

नाथ इति । भुक्तावगीतेषु फलेष्वसक्तः जितेन्द्रियारिः सः पृथिव्याः नाथः प्रजाहितेषु आहितसर्वभावः, धर्मैककार्यः सन् मुनिवद् बभूव इत्यन्वयः ।

भुक्तेषु उपभुक्तेषु अवगीतेषु निन्दितेषु फलेषु विषयात्मकेषु असक्तः पद्मपत्रवदनासक्तः, जितानि विषयोन्मुखानि इन्द्रियाण्येव अरयः येन सः बोधिसत्त्वरूपः पृथिव्या नाथो नरेन्द्रः प्रजाहितेषु प्रजाजनकल्याणेषु आहितः सर्वभावः सर्वात्मना हृदयं येन सः, धर्मैककार्यः धर्मैकचेताः मुनिवत् मुनितुल्यवृत्तिः बभूव ॥ १ ॥

विवेद लोकस्य हि स स्वभावं प्रधानचर्यानुकृतिप्रधानम् ।
श्रेयः समाधित्सुरतः प्रजासु विशेषतो धर्मविधौ ससञ्जे ॥ २ ॥

विवेद इति । स हि प्रधानचर्यानुकृतिप्रधानं लोकस्य स्वभावं विवेद, अतः प्रजासु श्रेयः समाधित्सुः विशेषतो धर्मविधौ ससञ्जे इत्यन्वयः ।

स हि राजेन्द्रः प्रधानस्य राज्ञः चर्या आचरणं तस्य अनुकृतिः सैव प्रधानं प्रमुखं कर्म यस्य तं तथाविधं 'यथा राजा तथा प्रजा' इति न्यायादनुसरणपरं लोकस्य प्रजाजनस्य स्वभावं विवेद ज्ञातवान्, अतश्च तासु प्रजासु श्रेयः कल्याणं समाधित्सुः विस्तारयितुमिच्छन् विशेषतः धर्मविधौ दया-दान-दाक्षिण्यादौ ससञ्जे सक्तोऽभूत् ॥ २ ॥

ददौ धनं शीलविधिं समाददे क्षमां निषेवे जगदर्थमैहत ।
प्रजाहिताध्याशयसौम्यदर्शनः स मूर्तिमान्धर्म इव व्यरोचत ॥ ३ ॥

ददाविति । सः धनं ददौ, शीलविधिं समाददे, क्षमां निषेवे, जगदर्थं ऐहत, प्रजाहिताध्याशयसौम्यदर्शनः सः मूर्तिमान् धर्मं इव व्यरोचत इत्यन्वयः ।

सः राजा धनं ददौ याचकेभ्यः प्रायच्छत्, शीलविधिं यमनियमात्मकं संयमं समाददे स्वीचकार, क्षमां क्षान्तिं निषेवे असेवत, जगदर्थं जगत्कल्याणार्थं ऐहत इच्छामकरोत् । जगतः कल्याणोपायं व्यचिन्तयत् । प्रजाजनहिते आशयः यस्य सः प्रजाहिताध्याशयः अत एव सौम्यदर्शनः शोभनाकृतिः सः मूर्तिमान् सविग्रहः धर्मं इव व्यरोचत शुशुभे । उत्प्रेक्षालङ्कारः ॥ ३ ॥

अथ कदाचित्तद्भुजाभिगुप्तमपि तं विषयं सत्त्वानां कर्मवैगुण्यात्प्रमादवशगत्वाच्च वर्षकर्माधिकृतानां देवपुत्राणां दुर्वृष्टिपर्याकुलता क्वचित्क्वचिदभिदुद्राव । अथ स राजा व्यक्तमयं मम प्रजानां वा धर्मोपचारात्समुपनतोऽनर्थ इति निश्चितमतिः संरूढहिताध्याशयत्वात्प्रजासु तद्दुःखमसृष्यमाणो धर्मतत्त्वज्ञसंमतान्पुरोहितप्रमुखान्ब्राह्मणवृद्धान्मतिसचिवांश्च तदुद्धरणोपायं पप्रच्छ । अथ ते वेदविहितमनेकप्राणिशतवधारम्भभीषणं यज्ञविधिं सुवृष्टिहेतुं मन्यमानास्तस्मै संवर्णयामासुः । विदितवृत्तान्तस्तु स राजा यज्ञविहितानां प्राणिवैशसानां करुणात्मकत्वान्न तेषां तद्वचनं भावेनाभ्यनन्दत् । विनयानुवृत्त्या चैनान्प्रत्याख्यानरूक्षाक्षरमनुक्त्वा प्रस्तावान्तरेणैषां तां कथां तिरश्चकार । ते पुनरपि तं राजानं धर्मसंकथाप्रस्तावलब्धावसरा गाम्भीर्यावगूढं तस्य भावमजानाना यज्ञप्रवृत्तये समनुशशासुः ।

तस्य भुजाभ्यां बाहुभ्यां अभिगुप्तं अभिरक्षितमपि, सत्त्वानां प्राणिनां, वर्षकर्म वृष्टिकर्म तत्र अधिकृतानां अधिकारिणां देवपुत्राणां देवदूतानां वा, मेघानां प्रमादवशगत्वाच्च इति योज्यम् । अभिदुद्राव पीडयामास । संरूढः हिताध्याशयः हितकरणाशयः यस्य तस्य भावः तस्मात् । उद्धरणोपायं निवारणोपायम् । अनेकेषां प्राणिनां पशूनां यत् शतं तेषां वधारम्भः वधकर्म तेन भीषणम् । प्राणिवैशसानां प्राणिहननानाम् । भावेन चेतसा । प्रस्तावान्तरेण कथान्तरप्रसङ्गेन । गाम्भीर्येण गम्भीरतया अवगूढं छन्नम् ॥

कार्याणि राज्ञां नियतानि यानि लाभे पृथिव्याः परिपालने च।
नात्येति कालस्तव तानि नित्यं तेषां क्रमो धर्मसुखानि यद्वत् ॥ ४॥

कार्याणीति। पृथिव्याः लाभे परिपालने च नियतानि यानि राज्ञां कार्याणि तानि नित्यं तव कालः नात्येति, यद्वत् धर्मसुखानि, (तद्वत्) तेषां क्रमः (अस्ति) इत्यन्वयः।

पृथिव्याः लाभे अधिगमे ततः परिपालने परिपोषणे च नियतानि नियमितानि नीतिशास्त्रोक्तानि यानि राज्ञां कार्याणि सन्ति, तानि नित्यं तव कालः दिनचर्यात्मकः न अत्येति उल्लङ्घयति, यद्वत् धर्मसुखानि धर्मजनितसुखानि नियतभावीनि तद्वत् तेषां प्रजापालनोपयुक्तानां कर्मणां क्रमः नियमः अस्तीति शेषः ॥ ४ ॥

त्रिवर्गसेवानिपुणस्य तस्य प्रजाहितार्थं धृतकार्मुकस्य।
यज्ञाभिधाने सुरलोकसेतौ प्रमादतन्द्रेव कथं मतिस्ते ॥ ५ ॥

त्रिवर्गेति। प्रजाहितार्थं धृतकार्मुकस्य त्रिवर्गसेवानिपुणस्य तस्य ते यज्ञाभिधाने सुरलोकसेतौ प्रमादतन्द्रेव मतिः कथम्? इत्यन्वयः।

प्रजाहितार्थं प्रजाजनकल्याणाय धृतकार्मुकस्य गृहीतधनुषः, त्रिवर्गस्य धर्मार्थकामानां सेवायां यथावसरमुपयोगे निपुणस्य तस्य ते यज्ञाभिधाने यज्ञरूपे सुरलोकस्य देवलोकस्य देवलोकगमनार्थं सेतौ सेतुबन्धे प्रमादेन अनवधानेन तन्द्रा जडतेव मतिः कथं? अस्तीति शेषः। धर्मज्ञः सन् कथं यज्ञमुपेक्षसे इति भावः ॥ ५ ॥

भृत्यैरिवाज्ञा बहुमन्यते ते साक्षादियं सिद्धिरिति क्षितीशैः।
श्रेयांसि कीर्तिज्वलितानि चेतुं यज्ञैरयं ते रिपुकाल कालः ॥ ६ ॥

भृत्यैरिति। हे रिपुकाल! भृत्यैरिव क्षितीशैः साक्षात् सिद्धिरिति इयं ते आज्ञा बहुमन्यते, (अतः) यज्ञैः कीर्तिज्वलितानि श्रेयांसि चेतुं अयं ते कालः (अस्ति) इत्यन्वयः।

हे रिपुकाल! शत्रुकुलान्तक! भृत्यैरिव सेवकैरिव क्षितीशैः नानादेशगतैः राजभिः साक्षात् प्रत्यक्षं सिद्धिः सङ्कल्पसिद्धिः इति मत्वा इयं ते तवाऽऽज्ञा शासनं बहुमन्यते सादरं मूर्ध्नि धार्यते, अतः यज्ञैः मखानुष्ठानैः कीर्तिज्वलितानि यशोभासुराणि श्रेयांसि कल्याणपरम्पराः चेतुं अधिगन्तुं अयं ते कालः समुचितोऽवसरः अस्तीति शेषः ॥ ६ ॥

कामं सदा दीक्षित एव च त्वं दानप्रसङ्गान्नियमादराच्च ।
वेदप्रसिद्धैः क्रतुभिस्तथाऽपि युक्तं भवेन्मोक्तुमृणं सुराणाम् ॥ ७ ॥

कामभिति । दानप्रसङ्गात्, नियमादरात् च कामं त्वं सदा दीक्षित एव च (असि) तथाऽपि वेदप्रसिद्धैः क्रतुभिः सुराणां ऋणं मोक्तुं युक्तं भवेत् इत्यन्वयः ।

अयं भावः—दानशीलतया नियमानुसारितया च सदा दीक्षितकल्पस्यापि भवतो यागादिभिः श्रौतैः कर्मभिर्देवसन्तर्पणमपि कर्तव्यमेव इति ॥ ७ ॥

स्विष्ट्याभितुष्टानि हि दैवतानि भूतानि वृष्ट्या प्रतिमानयन्ति ।
इति प्रजानां हितमात्मनश्च यशस्करं यज्ञविधिं जुषस्व ॥ ८ ॥

स्विष्ट्येति । हि स्विष्ट्या अभितुष्टानि दैवतानि वृष्ट्या भूतानि प्रतिमानयन्ति, इति प्रजानां आत्मनश्च हितं यशस्करं यज्ञविधिं जुषस्व इत्यन्वयः ।

हि यतः स्विष्ट्या शोभनया इष्ट्या यागादिककर्मणा अभितुष्टानि सन्तुष्टानि दैवतानि देवा इन्द्रादयः वृष्ट्या वर्षणेन भूतानि सत्त्वान् प्राणिनः प्रतिमानयन्ति, सन्तोषयन्ति, इति अवेत्य प्रजानां आत्मनः स्वस्य च हितं हितकरं यशस्करं कीर्तिनिदानं यज्ञविधिं जुषस्व समाचर ॥ ८ ॥

तस्य चिन्ता प्रादुरभवत्, अतिदुर्न्यस्तो बतायं परप्रत्ययहार्यपेलवमतिरमीमांसको धर्मप्रियः श्रद्दधानो जनो यत्र हि नाम ।

अतिदुर्न्यस्तः अति दुरभ्यस्तः । बतेति खेदे । परेषां अन्येषां प्रत्ययः विश्वासः तेन हार्या पेलवा कोमला मतिर्यस्य सः । अमीमांसकः अविचारकः ।

य एव लोकेषु शरण्यसम्मतास्त एव हिंसामपि धर्मतो गताः ।
विवर्तते कष्टमपायसङ्कटे जनस्तदादेशितकापथानुगः ॥ ९ ॥

य एवेति । लोकेषु ये एव शरण्यसम्मताः त एव धर्मतो हिंसामपि गताः (सन्ति) तदादेशितकापथानुगः जनः अपायसङ्कटे विवर्तते (इति) कष्टम्, इत्यन्वयः ।

लोकेषु जनेषु य एव जनाः शरण्याः सम्मताः सर्वेषामाश्रयभूताः ब्राह्मणादयः राजानो वा त एव धर्मतः यज्ञादि व्याजेन हिंसामपि पशुहिंसादिरूपं कर्माऽपि गताः प्राप्ताः समाचरन्तीति यावत् । तैरादिष्टं उपदिष्टं कापथं कुमार्गं हिंसादिरूपं अनुगच्छतीति तथोक्तः जनः जनसमुदायः अपायः परलोकहानिः तद्रूपिणि सङ्कटे विवर्तते इत्येतत् कष्टं कष्टप्रदम् ॥ ९ ॥

को हि नामाभिसम्बन्धो धर्मस्य पशुहिंसया ।
सुरलोकाधिवासस्य दैवतप्रीणनस्य वा ॥१०॥

को हीति । सुरलोकाधिवासस्य दैवतप्रीणनस्य वा धर्मस्य पशुहिंसया को हि नाम अभिसम्बन्धः ? इत्यन्वयः ।

अयं भावः—स्वर्गप्राप्तिफलकस्य देवेन्द्रप्रसादनफलकस्य वा यागानुष्ठानस्य हिंसया कः खलु सम्बन्धो भवेत् ? ॥१०॥

विशस्यमानः किल मन्त्रशक्तिभिः पशुर्दिवं गच्छति तेन तद्वधः ।
उपैति धर्मत्वमितीदमप्यसत्परैः कृतं को हि परत्र लप्स्यते ॥११॥

विशस्यमान इति । मन्त्रशक्तिभिः विशस्यमानः पशुः दिवं गच्छति, तेन तद्वधो धर्मत्वमुपैति किलेति इदमपि असत् ( यतः ) परैः कृतं को हि परत्र लप्स्यते इत्यन्वयः ।

मन्त्रशक्तिभिः विशस्यमानः मन्त्रोच्चारणपूर्वकं हन्यमानः पशुः दिवं स्वर्गं गच्छति, तेन तद्वधः तस्य पशोर्वधः धर्मत्वमुपैति धर्मतां याति किल किलेत्यलीके । इतीदमपि कथनं असत् न युक्तिसङ्गतं, तथाहि परैः कृतं परैः पश्वादिभिः कृतं स्वर्गारोहणादिरूपं कर्म को हि नाम जनः परत्र प्राणोत्क्रमणादूर्ध्वं परत्र परलोके लप्स्यते को वाऽधिगमिष्यति ॥११॥

असत्प्रवृत्तेरनिवृत्तमानसः शुभेषु कर्मस्वविरूढनिश्चयः ।
पशुर्दिवं यास्यति केन हेतुना हतोऽपि यज्ञे स्वकृताश्रयाद्विना ॥१२॥

असत्प्रवृत्तेरिति । असत्प्रवृत्तेः अनिवृत्तमानसः शुभेषु कर्मसु अविरूढ-निश्चयः पशुः यज्ञे हतोऽपि स्वकृताश्रयात् विना केन हेतुना दिवं यास्यति इत्यन्वयः।

असत्प्रवृत्तेः कामक्रोधाद्यावेगेभ्यः अनिवृत्तमानसः निवृत्तिमजानन् शुभेषु यज्ञादिषु कर्मसु अविरूढः अनुत्पन्नः निश्चयः यस्य सः । अविज्ञातविधिरहस्यः पशुः यज्ञे हतोऽपि निहतोऽपि स्वकृतस्य सुकृतस्य आश्रयात् विना आश्रय त्रिनेति यावत् केन हेतुना केनाऽवलम्बेन दिवं स्वर्गं यास्यति ? । स्वर्गप्राप्तिः किल स्वकृत-सुकृतलभ्या, पशोश्च तदज्ञानात् कथमेतद् घटत इति प्रश्नोऽयमिति भावः ॥१२॥

हतश्च यज्ञे त्रिदिवं यदि व्रजेन्ननु व्रजेयुः पशुतां स्वयं द्विजाः ।
यतस्तु नायं विधिरीक्ष्यते क्वचिद्वचस्तदेषां क इव ग्रहीष्यति ॥१३॥

हतश्चेति । यज्ञे हतश्च ( पशुः ) यदि त्रिदिवं व्रजेत्, ननु स्वयं द्विजाः ( अपि ) पशुतां व्रजेयुः, यतः अयं विधिस्तु क्वचित् न ईक्ष्यते, तत् एषां वचः क इव ग्रहीष्यति इत्यन्वयः ।

अत्राऽयम्भावः—यदि यज्ञे हतः पश्वादिः स्वर्गं गच्छेत्, तर्हि यज्ञे हताः ब्राह्मणा एव कथं स्वर्गं न गच्छेयुः न च पश्वतिरिक्तानां वधविधिः दृश्यते, तत एषां वचसः संदिग्धत्वात् पाक्षिकत्वाच्च अप्रामाण्यमिति ॥१३॥

अतुल्यगन्धर्द्धिरसौजसं शुभां सुधां किलोत्सृज्य वराप्सरोधृताम् ।
मुदं प्रयास्यन्ति वपादिकारणाद्वधेन शोच्यस्य पशोर्दिवौकसः ॥१४॥

अतुल्येति । दिवौकसः अतुल्यगन्धर्द्धिरसौजसं वराप्सरोधृतां शुभां सुधां उत्सृज्य किल वपादि-कारणात् शोच्यस्य पशोर्वधेन मुदं प्रयास्यन्ति किमु ? इत्यन्वयः ।

दिवौकसः स्वर्गिणो देवाः अतुल्याऽसमाना गन्धर्द्धिः सुगन्धसम्पत् रसे वर्तमानं ओजः मादकतादि च यस्यास्तां वराप्सरोधृतां अनुपमसुरसुन्दरीकरचषकवर्तिनीं शुभां सुधां पीयूषं वारुणीमिति यावत् । उत्सृज्य सन्त्यज्य किलेति सम्भावनायाम् । वपादिः अन्तःस्वग्विशेषः तस्याः कारणात् हेतोः शोच्यस्य अनुकम्पनीयस्य पशोर्वधेन विशसनेन मुदं प्रयास्यन्ति हृष्टा भविष्यन्ति किमु ? नैवेति शेषः ॥१४॥

तदिदमत्र प्राप्तकालमिति विनिश्चित्य स राजा 'यज्ञारम्भसमुत्सुक इव नाम तत्तेषां वचनं प्रतिगृह्यावोचदेनान् । सनाथः खल्वहमनुगृहीतश्च यदेवं मे हितावहितमनसोऽत्रभवन्तः । तदिच्छामि पुरुषमेधसहस्रेण यष्टुम् । अन्विष्यतां तदुपयोग्यसम्भारसमुदानयनार्थं यथाधिकारम- मात्यैः । परीक्ष्यतां सत्रागारनिवेशनयोग्यो भूमिप्रदेशस्तदनुगुणश्च तिथि-करण-मुहूर्त-नक्षत्र-योग इति । अथैनं पुरोहित उवाच—

ईप्सितार्थसिद्धये स्नातु तावन्महाराज एकस्य यज्ञस्य समाप्तावभृथे । अथोत्तरेषामारम्भः करिष्यते क्रमेण । युगपत्पुरुषपशवः सहस्रशो हि परिगृह्यमाणा व्यक्तमुद्वेगदोषाय प्रजानां ते स्युरिति । अस्त्येतदिति ब्राह्म- णैरुक्तः स राजा तानुवाच—अलमत्र भवतां प्रकृतिकोपाशङ्कया । तथाहि करिष्ये यथोद्वेगं मे प्रजा न यास्यन्तीति । अथ स राजा पौरजान-

पदान्सन्निपात्याब्रवीत्, इच्छामि पुरुषमेधसहस्रेण यष्टुम्। न
अयार्हः कश्चिदकामः पुरुषः पशुत्वे नियोक्तुमुद्दिष्टः। तद्यं यमतः प्रमृ
यो द्रक्ष्यामि व्यवधूतप्रमादनिद्रेण विमलेन चारचक्षुषा शीलमर्यादाति
र्तिनमस्मदाज्ञां परिभवन्तं तं तं स्वकुलपांसनं देशकण्टकमहं यज्ञपशु
निमित्तमादास्य इत्येतद्वो विदितमस्त्विति। अथ तेषां मुख्यतमाः प्राञ्ज
लयो भूत्वैनमूचुः—

नामेत्यलीकसंभावनायाम्। हिते हितकारके कर्मणि अवहितं सावधानं मनो
येषान्ते। पुरुषमेधसहस्रेण पशुस्थाने वध्यैः पुरुषैः युक्तेन यागसहस्रेण। सत्राग
यज्ञशाला। अवभृथे यज्ञाऽऽवसानिके स्नानविशेषे। उत्तरेषां पुरुषमेधयागानाम्
न चेति मया कश्चिदकामः अकुत्सितबुद्धिः पुरुषः पशुत्वे नियोक्तुं अर्हः नोद्दि
इत्यन्वयः। व्यवधूतेति अप्रमत्तेन चारचक्षुषा 'चारैः पश्यन्ति राजानः' इत्युक्तेः
परिभवन्तमुल्लङ्घयन्तम्।

सर्वाः क्रियास्तव हितप्रणवाः प्रजानां तत्रावमाननविधेर्नरदेव कोऽर्थः।
ब्रह्माऽपि ते चरितमभ्यनुमन्तुमर्हः साधुप्रमाण परमत्र भवान्प्रमाणम् ॥१५

सर्वा इति। हे नरदेव! तव सर्वाः क्रियाः प्रजानां हितप्रवणाः (सन्ति
तत्र अवमाननविधेः कोऽर्थः? ते चरितं ब्रह्माऽपि अभ्यनुमन्तुमर्हः (अस्ति
परं अत्र हे साधुप्रमाण! भवान् एव प्रमाणम्, इत्यन्वयः।

हे नरदेव! नरेश! तव सर्वाः क्रियाः सर्वे व्यवसायाः प्रजानां प्रजाजनानां
हितप्रवणाः हितावहा एव सन्ति, तत्र अवमाननविधेः अपमानव्यापारस्य कोऽर्थः
प्रयोजनम्? यदि कश्चिदवमानकारी भवेत्तर्हि तस्य दण्ड्यत्वे कः संदेहः? ते
चरितं ब्रह्माऽपि प्रजापतिरपि अभ्यनुमन्तुं अनुमन्तुं अर्हः समर्थः, अस्ति,
अत्र हे साधुप्रमाण! सज्जनानुगामिन्! भवान् एव प्रमाणं त्वमेवाऽत्र प्रमा
असि इति शेषः ॥१५॥

प्रियं यदेव देवस्य तदस्माकमपि प्रियम्।
अस्मत्प्रियहितादन्यद्दृश्यते नहि ते प्रियम् ॥१६॥

प्रियमिति। यदेव देवस्य प्रियं, अस्माकमपि (तदेव) प्रियम्। (यतः
अस्मत् प्रियहितात् अन्यत् ते प्रियं नहि दृश्यते इत्यन्वयः।

अयं भावः—अस्मद्दुहितावेक्षणमात्रबद्धमनसो देवस्य यत्प्रियं तदेवाऽस्माकमपीति न वक्तव्याऽवसरः ॥१६॥

इति प्रतिगृहीतवचसः पौरजानपदैः स राजा जनप्रकाशेनाडम्बरेण प्रत्ययितानमात्यान्पापजनोपग्रहणार्थं जनपदं नगराणि च प्रेषयामास समन्ततश्च प्रत्यहमिति घोषणाः कारयामास ।

प्रत्ययितान् विश्वस्तान् । पापजनानां पापिनां उपग्रहणार्थं अन्वेषणार्थम् ।

अभयमभयदो ददाति राजा स्थिरशुचिशीलधनाय सज्जनाय ।
अविनयनिरतैः प्रजाहितार्थं नरपशुभिस्तु सहस्रशो यियक्षुः ॥१७॥

अभयमिति । अभयदो राजा प्रजाहितार्थं स्थिरशुचिशीलधनाय सज्जनाय अभयं ददाति, अविनयनिरतैः नरपशुभिस्तु सहस्रशो यियक्षुः (वर्तते) इत्यन्वयः ।

अभयदः अभयं अभीतिवचनं ददातीति तथाविधः राजा प्रजाजनहितार्थं स्थिरं दृढं शुचि पवित्रं शीलमाचरणं तदेव धनं यस्य तस्मै सज्जनाय साधवे अभयं ददाति 'न भेतव्य' मिति सूचयति, अविनयनिरतैः अत्युद्धतैः नरा एव पशवः तैस्तु सहस्रशः सहस्रधा यियक्षुः यष्टुमिच्छन् वर्तते इति शेषः । 'पुष्पिताग्रा' वृत्तम् ॥१७॥

तद्यः कश्चिदतः प्रभृत्यविनयश्लाघानुवृत्त्युद्भवा-
त्सामन्तक्षितिपार्चितामपि नृपस्याज्ञामवज्ञास्यति ।
स स्वैरेव विषह्य यज्ञपशुतामापादितः कर्मभि-
र्यूपाबद्धतनुर्विषादकृपणः शुष्यञ्जनैर्द्रक्ष्यते ॥१८॥

तद्य इति । तत् अतः प्रभृति यः कश्चित् अविनयश्लाघानुवृत्त्युद्भवात् सामन्तक्षितिपार्चितामपि नृपस्य आज्ञां अवज्ञास्यति, सः स्वैरेव कर्मभिः विषह्य यज्ञपशुतामापादितः यूपाबद्धतनुः विषादकृपणः शुष्यन् जनैर्द्रक्ष्यते इत्यन्वयः ।

तत्तस्मात् हेतोः अतः प्रभृति अद्यप्रभृति यः कश्चित् प्रजाजनः अविनये असदाचरणे श्लाघा स्पृहा तया याऽनुवृत्तिः पौनःपुन्येनाऽऽचरणं तस्य उद्भवात् दुर्व्यवसायात् सामन्तैः माण्डलिकैः क्षितिपैः राजभिः अर्चितां सादरं स्वीकृतामपि नृपस्य राजर्षेः आज्ञां शासनं अवज्ञास्यति उल्लङ्घयिष्यति, सः (जनः) स्वैरेव अविनयात्मकैः कर्मभिः विषह्य प्रसह्य यज्ञे पशुतां पशुरूपतां आपादितः प्रापितः सन् यूपे यज्ञस्तम्भे आबद्धा तनुर्यस्य सः विषादेन दुःखेन कृपणः दीनाकृतिः शुष्यन्

-मृत्युभयेन प्रक्षुभ्यन् व्याकुलतरः पशुरिवेति यावत्। जनैर्लोकैः द्रक्ष्यते अवलोकितो भविष्यति ॥१८॥

अथ तद्विषयनिवासिनः पुरुषा यज्ञपशुनिमित्तं दुःशीलपुरुषान्वेषणादरं तमन्ववेक्ष्य राज्ञस्तां च घोषणामतिभीषणां प्रत्यहमुपशृण्वन्तः पापजनोपग्रहावहितांश्च राजपुरुषान्समन्ततः समापततोऽभिवीक्ष्य त्यक्तदौःशील्यानुरागाः शीलसंवरसमादानपरा वैरप्रसङ्गपराङ्मुखाः परस्परप्रेमगौरवसुमुखाः प्रशान्तविग्रहविवादा गुरुजनवचनानुवर्तिनः संविभागविशारदाः प्रियातिथयो विनयनैभृत्यश्लाघिनः कृत इव युगे बभूवुः।

पापाः पापिनो ये जनास्तेषामुपग्रहे बन्धने अवहितान् सावधानान्। शीलसंवरः शीलरक्षणं सदाचरणमिति यावत्। संविभागः विभज्य समतया दानम्। नैभृत्यं मर्यादानुपालनम्।

भयेन मृत्योः परलोकचिन्तया कुलाभिमानेन यशोऽनुरक्षया।
सुशुक्लभावाच्च विरूढया ह्रिया जनः स शीलामलभूषणोऽभवत् ॥१९॥

भयेनेति। मृत्योः भयेन परलोकचिन्तया कुलाऽभिमानेन यशोऽनुरक्षया, सुशुक्लभावात् विरूढया ह्रिया च स जनः शीलाऽमलभूषणः अभवत् इत्यन्वयः।

मृत्योः भयेन प्राणापहरणभयेन परलोकचिन्तया देवलोकावाप्तिवाञ्छया कुलस्य वंशस्य अभिमानेन आभिजात्येन यशसः कीर्तेः अनुरक्षया रिरक्षयिषयेत्यर्थः। सुशुक्लभावात् निर्मलाचरणपरतया विरूढया हृदि समुन्मिषन्त्या ह्रिया लोकलज्जया च स तत्रत्यः प्रजाजनः शीलं सदाचार एवाऽमलं निर्दोषं भूषणमलङ्करणं यस्य स तथाविधः अभवत् ॥१९॥

यथा यथा धर्मपरोऽभवज्जनस्तथा तथा रक्षिजनो विशेषतः।
चकार दुःशीलजनाभिमार्गणामतश्च धर्मान्न चचाल कश्चन ॥२०॥

यथा यथेति। जनः यथा यथा धर्मपरः अभवत्, तथा तथा रक्षिजनः विशेषतः दुःशीलजनाभिमार्गणां चकार, अतश्च कश्चन धर्मान्न चचाल इत्यन्वयः।

अयं भावः—यथा यथा नृपतेर्भयेन प्रजाजनो विशेषतो धर्माचरणमारेभे, तथा तथा रक्षिणो राजपुरुषा अपि दुःशीलजनान्वेषणे अवहिता बभूवुः, परं तैः कोऽपि पापात्मा न लब्ध इति ॥२०॥

स्वदेशवृत्तान्तमथोपशुश्रुवानिमं नृपः प्रीतिविशेषभूषणः ।
चरान्प्रियाख्यानकदानविस्तरैः सन्तर्पयित्वा सचिवान्समन्वशात्॥२१॥

स्वदेशेति । अथ प्रीतिविशेषभूषणः नृपः इमं स्वदेशवृत्तान्तं उपशुश्रुवान् प्रियाख्यानकदानविस्तरैः चरान् सन्तर्पयित्वा सचिवान् समन्वशात् इत्यन्वयः ।

अथ प्रीतिविशेषः भूषणं यस्य सः परमप्रीतः नृपः इमं पूर्वोक्तं स्वदेशवृत्तान्तं स्वदेशपरिस्थितिं उपशुश्रुवान् संशृण्वन् प्रियं आख्यानं भाषणं तदेव प्रियाख्यानकं दानविस्तरः दानपरम्पराश्च ताभिः चरान् संवादहारिणो गुप्तचरान् सन्तर्पयित्वा सन्तोषयित्वा सचिवान् मन्त्रिणश्च वक्ष्यमाणविधया समन्वशात् आज्ञापयामास ॥२१॥

परा मनीषा मम रक्षितुं प्रजा गताश्च ताः सम्प्रति दक्षिणीयताम् ।
इदं च यज्ञाय धनं प्रतर्कितं यियक्षुरस्मीति यथा प्रतर्कितम् ॥२२॥

परेति । प्रजाः रक्षितुं मम परा मनीषा ( अस्ति ) ताश्च सम्प्रति दक्षिणीयतां गताः ( सन्ति ) यज्ञाय प्रतर्कितं इदं च धनं, यियक्षुरस्मीति यथा प्रतर्कितं ( अभूत् ) इत्यन्वयः ।

प्रजाः प्रजाजनान् रक्षितुं पालयितुं मम पराऽतिशयवती मनीषाऽभिलाषा अस्ति, ताश्च प्रजाः सम्प्रति शासनेन दक्षिणीयतां दाक्षिण्यं शीलवत्वं गताः प्राप्ताः सन्ति, यज्ञाय यज्ञार्थं प्रतर्कित निर्णीतं इदं च प्रजारूपं धनं यियक्षुरस्मीति नरमेधसहस्रेण यष्टुकामोऽस्मीति भयतः यथा चिन्तितं सदाचारशालि अभूत् ॥२२॥

यदीप्सितं यस्य सुखेन्धनं धनं प्रकाममाप्नोतु स तन्मदन्तिकम् ।
इतीयमस्मद्विषयोपतापिनी दरिद्रता निर्विषया यथा भवेत् ॥२३॥

यदीप्सितमिति । यदि सुखेन्धनं धनं यस्य ईप्सितं ( भवेत् ) सः तत् मदन्तिकात् प्रकाममाप्नोतु, इति अस्मद्विषयोपतापिनी इयं दरिद्रता यथा निर्विषया भवेत् ( तथा यतनीयम् ) इत्यन्वयः ।

यदि खलु सुखेन्धनं सुखोद्दीपकं धनं द्रव्यं यस्य ईप्सितं अभिलाषाविषयं ( भवेत् ) सः तत् धनं मदन्तिकात् मत्सकाशात् प्रकामं यथेच्छमाप्नोतु लभताम् । इति अनया रीत्या अस्मद्विषयोपतापिनी अस्मद्देशक्लेशहेतुः दरिद्रता यथा निर्विषया निरालम्बा यथा भवेत् । यथा नश्येत् तथा यतनीयमिति भावः ॥२३॥

मयि प्रजारक्षणनिश्चयस्थिते सहायसम्पत्परिवृद्धसाधने ।
इयं जनार्तिर्मदमर्षदीपनी मुहुर्मुहुर्मे ज्वलतीव चेतसि ॥२४॥

मयीति । सहायसपत्परिवृद्धसाधने मयि प्रजारक्षणनिश्चयस्थिते ( सति ) मदमर्षदीपनी इयं जनाऽऽर्तिः मे चेतसि मुहुर्मुहुः ज्वलतीव इत्यन्वयः ।

अयं भावः—सकलसहायकसंपन्ने मयि प्रजाजनहिताय बद्धकङ्कणे स्थितवति सति तेषां दारिद्र्यदशा मया द्रष्टुमपि न शक्यते, अतस्तन्निरासः सत्वरं विधेय एवेति ॥२४॥

अथ ते तस्य राज्ञः सचिवाः परममिति प्रतिगृह्य तद्वचनं सर्वेषु ग्राम-नगरनिगमेषु मार्गविश्रामप्रदेशेषु च दानशालाः कारयित्वा यथा सन्दिष्टं राज्ञा प्रत्यहमर्थिजनमभिलषितैरर्थविसर्गैः सन्तर्पयामासुः ।

परमं इति 'ओमिति' प्रतिगृह्य स्वीकृत्य । निगमेष्वापणेषु । अर्थविसर्गैः यथेच्छं दानैः ।

अथ विहाय जनः स दरिद्रतां सममवाप्तवसुर्वसुधाधिपात् ।
विविधचित्रपरिच्छदभूषणः प्रविततोत्सवशोभ इवाभवत् ॥२५॥

अथेति । अथ स जनः वसुधाधिपात् सममवाप्तवसुः दरिद्रतां विहाय विविध-चित्रपरिच्छदभूषणः प्रविततोत्सवशोभ इव अभवत् इत्यन्वयः ।

अथ स जनः तत्रत्यः प्रजाजनः वसुधाधिपात् समं एककाल एव अवाप्तं अधिगतं वसु द्रव्यं येन स तथाविधः दरिद्रतां दारिद्र्यं विहाय सहसैव दूरीकृत्य विविधानि बहुप्रकाराणि चित्राणि चित्रविचित्राणि परिच्छदभूषणानि वसनाऽऽभ-रणानि यस्य स अत एव प्रवितता संजनिता उत्सवशोभा यस्य तादृश इव अभवत् संपदा शुशुभे । 'द्रुतविलम्बितं' वृत्तम् ॥२५॥

प्रमुदितार्थिजनस्तुतिसश्चितं प्रविततान नृपस्य दिशो यशः ।
तनुतरङ्गविवर्धितविस्तरं सर इवाम्बुजकेशरजं रजः ॥२६॥

प्रमुदितेति । अम्बुजकेशरजं तनुतरङ्गविवर्धितविस्तरं रजः सर इव प्रमुदि-तार्थिजनस्तुतिसश्चितं नृपस्य यशः दिशः प्रविततान इत्यन्वयः ।

अम्बुजकेशरजं कमलकिञ्जल्कसम्भवं तनुभिरल्पैस्तरङ्गैः विवर्धितः विस्तरः प्रसारो यस्य तत् रजः परागं सरः सरोवरमिव प्रमुदितैः अर्थिजनैः कृताः या

स्तुतयः प्रशंसावाक्यानि तैः सञ्चितं राशीभूतं नृपस्य यशः कीर्तिकलापः दिशः प्रवितताल प्रचचाल, दिङ्मुखेषु लब्धप्रतिष्ठमभूदिति भावः ॥२६॥

इति नृपस्य सुनीतिगुणाश्रयात्सुचरिताभिमुखे निखिले जने ।
समभिभूतबलाः कुशलोच्छ्रयैर्विलयमीयुरसङ्गमुपद्रवाः ॥२७॥

इतीति । इति नृपस्य सुनीतिगुणाश्रयात् निखिले जने सुचरिताऽभिमुखे ( सति ) कुशलोच्छ्रयैः समभिभूतबलाः उपद्रवाः असङ्गं विलयमीयुः इत्यन्वयः ।

इति पूर्ववर्णितप्रकारेण नृपस्य तस्य राजर्षेः सुनीतिर्धर्मानुगा या नीतिः स एव गुणः तदाश्रयात् तदवलम्बात् निखिले सकलेऽपि जने सुचरितस्य अभिमुखे धर्म्यकर्मैकासक्ते सति कुशलोच्छ्रयैः मङ्गलकर्मप्राबल्यात् समभिभूतं पराजितं तिरस्कृतं वा बलं प्रभावो येषां ते उपद्रवा अवृष्टिअतिवृष्टयादयः असङ्गं नितान्तं यथा स्यात्तथा विलयं नाशमीयुः अगमन् ॥२७॥

अविषमत्वसुखा ऋतवोऽभवन्नवनृपा इव धर्मपरायणाः ।
विविधसस्यधरा च वसुन्धरा सकमलामलनीलजलाशयाः ॥२८॥

अविषमेति । धर्मपरायणाः नवनृपा इव ऋतवः अविषमत्वसुखा अभवन् सकमलाऽमलनीलजलाशया वसुन्धरा च विविधसस्यधरा ( सती ) ( शुशुभे ) इत्यन्वयः ।

धर्मपरायणाः समदर्शिनः प्रजावत्सलाः नवनृपा इव नवभूपतय इव ऋतवः वसन्ताद्याः षड् ऋतवः अविषमत्वेन समतया सुखाः सर्वेषां प्रमोदावहाः अभवन्, षडपि ऋतवः सुखकरा बभूवुः । सकमलाः सपङ्कजाः अमलाः नीलाः नीलवर्णाश्च जलाशयाः तडागपुष्करिणीप्रभृतयः यस्यां सा वसुन्धरा धरित्री च विविधं बहुप्रकारं सस्यं धान्यं धारयतीति तथाविधा समभूदिति शेषः ॥२८॥

न जनमभ्यरुजन्प्रबला रुजः पटुतरं गुणमोषधयो दधुः ।
ऋतुवशेन ववौ नियतोऽनिलः परिययुश्च शुभेन पथा ग्रहाः ॥२९॥

न जनमिति । प्रबला रुजः जनं न अभ्यरुजन्, ओषधयः पटुतरं गुणं दधुः, नियतोऽनिलः ऋतुवशेन ववौ, ग्रहाश्च शुभेन पथा परिययुः इत्यन्वयः ।

प्रबलाः रुजः पीडाः उपद्रवा जनं प्रजाजनं न अभ्यरुजन् न अपीडयन्, ओषधयः वनस्पतयः पटुतरं प्रभावसम्पादकं गुणं दधुः धारयामासुः नियतः सतत-

वाही अनिलः समीरणः ऋतुवशेन यथासमयं ववौ चचाल, ग्रहाश्च शुभेन पर जनकल्याणप्रदया गत्या परिययुः परिभ्रमणं चक्रिरे ॥ २९॥

न परचक्रकृतं समभूद्भयं न च परस्परजं न च दैविकम् ।
नियमधर्मपरे निभृते जने कृतमिवात्र युगं समपद्यत ॥३०॥

न परेति नियमधर्मपरे निभृते जने ( सति ) परचक्रकृतं भयं न समभूत्, न च परस्परजं दैविकञ्च न ( भयं समभूत् ) किन्तु—अत्र कृतं युगं समपद्यत इवेत्यन्वयः ।

नियमः संयमः विहितस्वकर्मानुष्ठानादि, धर्मः देवताराधनाऽहिंसासत्यादि तत्परे तदेकासक्ते निभृते दर्शनश्रये जने सति परचक्रकृतं शत्रुजनोद्भवं भयं न समभूत्, न च न वा परस्परजं अन्योन्यमीर्ष्यादिजन्यं कलहादिरूपं च भयं न समभूत्, दैविकं दैवहेतुकं भूकम्पोल्कापातादिरूपं च भयं न समभूत्, किंतु प्रत्यु अत्र नृपते राज्ये कृतं युगं समपद्यत इव सत्ययुगमिव अजनि ॥३०॥

अथैवं क्रूरो न धर्मयज्ञेन राज्ञा प्रशमितेष्वर्थिजनदुःखेषु सार्धमुप द्रवैः प्रमुदितजनसम्बाधायामभ्युदयरम्यदर्शनायां वसुन्धरायां नृपतेरा शीर्वचनाध्ययनसव्यापारे लोके वितन्यमाने समन्ततो राजयशसि प्रसा दावर्जितमतिः कश्चिदमात्यमुख्यो राजानमित्युवाच—सुष्ठु खल्विदमुच्यते।

धर्मयज्ञेन धर्माचरणरूपेण यागेन । उपद्रवैः सार्धं अर्थिजनदुःखेषु प्रशमितेषु इत्यन्वयः । सम्बाधायां सङ्कुलायाम् ।

उत्तमाधममध्यानां कार्याणां नित्यदर्शनात् ।
उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥३१॥

उत्तमेति । उत्तमाधममध्यानां कार्याणां नित्यदर्शनात् बुद्धीनां उपर्युपरि ईश्वरबुद्धयः चरन्ति इत्यन्वयः ।

अयं भावः—उत्तम-मध्यम-अधमेषु नित्यं लोके प्रवर्तमानेषु कार्येषु महतां बुद्धयः सामान्यजनविचारमतिलङ्घ्य उच्चैस्तरं विचारमनुसरन्ति, अथवा उत्तमं कार्यमनुधावन्ति इति ॥३१॥

इति । देवेन हि पशुवैशसवाच्यदोषविरहितेन धर्मयज्ञेन प्रजानामु भयलोकहितं सम्पादितमुपद्रवाश्च प्रशमं नीता दारिद्र्य-दुःखानि च शीघ्रं प्रतिष्ठापितानाम् । किम्बहुना । समाप्यायिता प्रजाः ।

पशुवैशसेन पशुहिंसया वाच्यः अपवादार्हः यो दोषः तद्विरहितेन । शीले स्वाऽऽचारे ।

लक्ष्मेव क्षणदाकरस्य विततं गात्रे न कृष्णाजिनं
दीक्षायन्त्रणया निसर्गललिता चेष्टा न मन्दोद्यमा ।
मूर्ध्नश्छत्रनिभस्य केशरचना शोभा तथैवाऽथ च
त्यागैस्ते शतयज्वनोऽप्यपहृतः कीर्त्याश्रयो विस्मयः ॥३२॥

लक्ष्मेवेति । विततं क्षणदाकरस्य लक्ष्म इव गात्रे कृष्णाजिनं न ( अस्ति ) दीक्षायन्त्रणया निसर्गललिता चेष्टा मन्दोद्यमा न ( अस्ति ) छत्रनिभस्य मूर्ध्नः केशरचना शोभा च तथैव ( अस्ति ) अथ च ते त्यागैः शतयज्वनः कीर्त्याश्रयो विस्मयोऽपि अपहृतः इत्यन्वयः ।

विततं विस्तृतं क्षणदाकरस्य चन्द्रमसः लक्ष्म इव कलङ्कचिह्नमिव 'चिह्नं लक्ष्म च लक्षण' मित्यमरः । गात्रे वपुषि कृष्णाजिनं मृगचर्म नाऽस्ति, दीक्षा यज्ञदीक्षा तया वा यन्त्रणा मौनव्रतादिरूपा तया निसर्गललिता स्वभावमधुरा चेष्टा सस्मिती मधुरभाषणादिरूपा मन्दोद्यमा शिथिला नास्ति, छत्रनिभस्य राज्यश्रिय आतपत्र-तुल्यस्य मूर्ध्नः मस्तकस्य केशरचना भङ्गिशालिनी कुन्तलविच्छित्तिः सैव शोभा सौन्दर्यं तच्च तथैव यथापूर्वं अस्ति, नतु यज्ञदीक्षावशेन केशा अपाकृता इति भावः । अथ च एवं दीक्षानियमाभावेऽपि ते तव त्यागैः परानुग्रहैः शतयज्वनः शतक्रतो-रिन्द्रस्य कीर्त्याश्रयः यशः सम्भवः विस्मयोऽपि आश्चर्यं वा, अपहृतः तिरस्कृतो-ऽभूत् । कारणं विनाऽपि कार्यसमुदयात् विभावनालङ्कारः ॥३२॥

हिंसाविषक्तः कृपणः फलेप्सोः प्रायेण लोकस्य नयज्ञ यज्ञः ।
यज्ञस्तु कीर्त्याभरणः समस्ते शीलस्य निर्दोष मनोहरस्य ॥३३॥

हिंसाविषक्त इति । हे नयज्ञ ! प्रायेण फलेप्सोः लोकस्य यज्ञः हिंसाविषक्तः कृपणश्च ( भवति ) ते कीर्त्याभरणः यज्ञस्तु निर्दोषमनोहरस्य शीलस्य समः ( अस्ति ) इत्यन्वयः ।

हे नयज्ञ ! नीतिशालिन् ! प्रायेण बाहुल्येन फलेप्सोः फलमभिसन्धाय प्रवर्तमानस्य लोकस्य इतरजनस्य यज्ञः यागविधिः पशुहननादिवैशसेन हिंसाविषक्तः हिंसासंवलितः, कृपणः स्वार्थमात्रसाधनहेतुत्वादनुदारश्च भवति, ते तव कीर्त्या-

भरणः यशोविस्तारहेतुः यज्ञस्तु धर्मयज्ञस्तावत् निर्दोषतया मनोहरस्य सकलजनादर-पात्रस्य ते शीलस्य स्वभावस्य समः सर्वथाऽनुरूपः अस्तीति शेषः ॥३३॥

अहो प्रजानां भाग्यानि यासां गोपायिता भवान् ।
प्रजानामपि हि व्यक्तं नैवं स्याद्गोपिता पिता ॥३४॥

अहो इति । अहो प्रजानां भाग्यानि यासां भवान् गोपायिता ( अस्ति ), हि प्रजानामपि व्यक्तं पिता एवं गोपिता न स्यात् इत्यन्वयः ।

अयं भावः—ताः प्रजाः धन्याः खलु यासां भवादृशः पालयिता, प्रजानां पितरोऽपि न भवत्सदृशं पालयितुं प्रभवन्तीति ॥३४॥

अपर उवाच—

अपरः कश्चिदमात्यः ।

दानं नाम धनोदये सति जनो दत्ते तदाशावशः
सच्छीलेऽपि च लोकपंक्त्यभिमुखः स्वर्गे च जातस्पृहः ।
यात्वेषा परकार्यदक्षिणतया तद्वत्प्रवृत्तिस्तयो-
र्नाविद्वत्सु न सत्वयोगविधुरेष्वेषां समालक्ष्यते ॥३५॥

दानं नामेति । धनोदये सति जनः तदाशावशः ( सन् ) सत् शीलेऽपि लोकपङ्क्त्यभिमुखः स्वर्गे च जातस्पृहः दानं दत्ते नाम, या तु एषा परकार्यदक्षिणतया तद्वत् तयोः प्रवृत्तिर्दृश्यते, सैषा न अविद्वत्सु न च सत्वयोगविधुरेषु ( जनेषु ) समालक्ष्यते इत्यन्वयः ।

धनोदये सति धनसम्पन्नत्वे सति, जनः तदाशावशः धनवृद्ध्याशया, सत् शीलेऽपि आचरणेऽपि लोकपङ्क्त्यभिमुखः महाजनसमकक्षामारुरुक्षुः, स्वर्गे च परलोकलाभे च जातस्पृहः जातवाञ्छः, सन् दानं दत्ते दानानि प्रयच्छति, नामेति सम्भावनायाम् । यात्वेषा परकार्यदक्षिणतया परोपकारं मुख्यतया लक्ष्यीकृत्य तदनुगुणत्वेन तयोः शीलाऽभिवर्धनस्वर्गप्राप्त्योः प्रवृत्तिर्दृश्यते, सैषा न खलु अविद्वत्सु धर्मतत्वाऽनभिज्ञेषु न च सत्वयोगविधुरेषु सत्वगुणशून्येषु जनेषु समालक्ष्यते गोचरीक्रियते । धर्मरहस्यज्ञानां मौलिमणिरुदारहृदयश्च भवादृशोऽन्यो नाऽस्तीति भावः ॥३५॥

तदेवं कल्याणाशया न पापप्रवणमनुविधीयत इत्यादयश्च उपयितव्यम् ।

उपसंहरति तदेवमिति ।

इति प्रजाहितोद्योगः श्रेयःकीर्त्तिसुखावहः ।
यन्नृपाणामतो नालं तमनादृत्य वर्तितुम् ॥३६॥

इतीति । यत् नृपाणां इति प्रजाहितोद्योगः श्रेयःकीर्तिसुखावहः ( भवति ) अतः तमनादृत्य वर्तितुं ( कश्चिदपि नृपः ) न अलम्, इत्यन्वयः ।

अयं भावः—यतः प्रजाहितोद्योगः नृपतेः सुखाय भवति, अतः सर्वैरपि नृपतिभिस्तथैवाऽऽचरणीयमिति ॥३६॥

एवं राजाऽपवादेऽपि वाच्यम् । धर्माभ्यासः प्रजानां भूतिमावहतीति भूतिकामेन धर्मानुवर्तिना भवितव्यमित्येवमप्युन्नेयम् । न पशुहिंसा कदाचिदभ्युदयाय दानदमसंयमादयस्त्वभ्युदयायेति तदर्थिना दानादिपरेण भवितव्यमित्येवमपि वाच्यम् । लोकार्थचर्याप्रवणमतिरेवं पूर्वजन्मस्वपि भगवानिति तथागतवर्णेऽपि वाच्यम् ॥

❀ इति यज्ञजातकम् ❀

अपवादे एवं राजा बोधनीयः इत्यर्थः । भूतिं ऐश्वर्यम् । तदर्थिना अभ्युदयं वाञ्छता । लोकार्थचर्या लोकानुग्रहः । तथागतवर्णे बोधिसत्त्वमाहात्म्ये ।

❀ इति यज्ञजातकम् ❀

—:❀:—

## अथ शक्रजातकम् ।

आपदपि महात्मनामैश्वर्यसम्पद्वा सत्त्वेष्वनुकम्पां न शिथिलीकरोति । तद्यथाऽनुश्रूयते । बोधिसत्त्वः किलानल्पकालस्वभ्यस्तपुण्यकर्मा सात्मीभूतप्रदानदमसंयमकरुणः परहितनियतक्रियातिशयः कदाचिच्छक्रो देवानामिन्द्रो बभूव ।

आपत् आपत्तिः, ऐश्वर्यसम्पत् महाप्राणता वेत्यर्थः । स्वभ्यस्तं सम्यगभ्यस्तम् । सात्मीभूताः आत्मसात्कृताः प्रदानादयः येन सः । इन्द्रो बभूवेति शक्रत्वमाश्रितोऽवततारेति भावः ।

सुरेन्द्रलक्ष्मीरधिकं रराज तत्संश्रयात्स्फीततरप्रभावा ।
हर्म्ये सुधासेकनवाङ्गरागे निषक्तरूपा शशिनः प्रभेव ॥ १ ॥

सुरेन्द्रलक्ष्मीरिति । तत्संश्रयात् स्फीततरप्रभावा सुरेन्द्रलक्ष्मीः सुधासेकनवाङ्गरागे हर्म्ये निषक्तरूपा शशिनः प्रभेव अधिकं रराज इत्यन्वयः ।

तस्य बोधिसत्त्वस्य संश्रयात् आश्रयाद् हेतोः स्फीततरप्रभावा अधिकतरमाहात्म्या सुरेन्द्रलक्ष्मीः इन्द्रपदशोभा, सुधासेकेन चूर्णकालेपनेन नवाङ्गरागे उज्ज्वलकान्तौ हर्म्ये धनिकनिवासभवने निषक्तरूपा प्रतिबिम्बिता प्रसरन्ती शशिनः प्रभा ज्योत्स्नेव अधिकमतिशयेन रराज शुशुभे ॥ १ ॥

यस्याः कृते दितिसुता रभसागतानि
दिङ्नागदन्तमुसलान्युरसाभिजग्मुः ।
सौभाग्यविस्तरसुखोपनताऽपि तस्य
लक्ष्मीर्न दर्पमलिनं हृदयं चकार ॥ २ ॥

यस्या इति । यस्याः कृते दितिसुताः उरसा रभसागतानि दिङ्नागदन्तमुसलानि अभिजग्मुः, सौभाग्यविस्तरसुखोपनताऽपि सा लक्ष्मीः तस्य हृदयं दर्पमलिनं न चकार इत्यन्वयः ।

यस्याः देवेन्द्रलक्ष्म्याः कृते दितिसुता असुरवराः उरसा सङ्ग्रामेषु वक्षःस्थलेन रभसेन हठादेव आगतानि आपतन्ति दिङ्नागानां दिग्गजानां दन्ता एव मुसलानि तानि अभिजग्मुः स्वीचक्रुः तेषां प्रहारपातं सेहिरे, सौभाग्यविस्तरः सौभाग्यातिशयः सुखं नानाविधो भोगश्च ताभ्यामुपनता समन्विताऽपि सा लक्ष्मीः तस्य बोधिसत्त्वात्मनो देवेन्द्रस्य हृदयं स्वान्तं दर्पमलिनं गर्वदूषितं न चकार नाऽकरोत् ॥ २ ॥

तस्य दिवस्पृथिव्योः सम्यक्परिपालनोपार्जितां सर्वलोकानुव्यापिनीं कीर्तिसम्पदं तां च लक्ष्मीमत्यद्भुताममृष्यमाणा दैत्यगणाः कल्पनाटोपभीषणतरद्विरद-रथ-तुरग-पदातिना क्षुभितसागरघोरनिर्घोषेण जाज्वल्यमानविचित्रप्रहरणावरणदुर्निरीक्ष्येण महता बलकायेन युद्धायैनमभिजग्मुः ।

दिवस्पृथिव्योः स्वर्गभूतलयोः । कल्पनाटोपेन विचारदृशा भीषणतराः भयानकाः द्विरद-रथ-तुरग -पदातयो, यस्मिंस्तेन । बलकायेन सैन्यसमुदायेन ।

धर्मात्मनोऽपि तु स तस्य परावलेपः
क्रीडाविघातविरसं च भयं जनस्य ।
तेजस्विता नयपथोपनतः क्रमश्च
युद्धोद्धवाभिमुखतां हृदयस्य चक्रुः ॥ ३ ॥

धर्मात्मनोऽपीति । धर्मात्मनोऽपि तस्य सः परावलेपः क्रीडाविघातविरसं जनस्य भयं च, तेजस्विता नयपथोपनतः क्रमश्च हृदयस्य तु युद्धोद्धवाऽभिमुखतां चक्रुः इत्यन्वयः ।

धर्मात्मनोऽपि धार्मिकश्रेष्ठस्याऽपि तस्य परावलेपः स्वात्माऽभिमानः परकृत-धर्षणादुत्पन्नो रोषो वा, क्रीडा यथासु खजीवनयात्रा तस्याः विघातेन बाधेन विरसं वैरस्यावहं जनस्य जनतायाः भयं दानवभीतिः च, तेजस्विता ओजःशालित्वं, नयपथोपनतः नीतिमार्गानुसारी क्रमः शासनपद्धतिश्च ( एते सर्वे गुणाः सम्भूय ) हृदयस्य मनसः तु युद्धं एव उद्धवः उत्सवः तस्याऽभिमुखतां सम्मुखत्वं चक्रुः । अयं भावः—स्वभावतः शान्तिप्रियोऽपि प्रजाजनरक्षणादिभिः कारणैः युद्धाय सज्जोऽभूदिति ॥ ३ ॥

अथ स महासत्त्वस्तुरगवरसहस्रयुक्तमभ्युच्छ्रितार्हद्वसनचिह्नरुचिर-ध्वजं विविधमणिरत्नदीप्तिव्यवभासितमतिज्वलद्वपुषं कल्पनावि-भागोपनियतनिशितज्वलितविविधायुधविराजितोभयपार्श्वं पाण्डुकम्ब-लिनं हैमं रथवरमभिरुह्य महता हस्त्यश्व-रथ-पदातिविचित्रेण देवानी-केन परिवृतस्तदसुरसैन्यं समुद्रतीरान्त एव प्रत्युज्जगाम ।

महासत्त्वः महाबलः । अभ्युच्छ्रितः उन्नमितः अर्हद्वसनचिह्नरुचिरः बोधिसत्त्व-लक्षणशाली काषायादिवर्णवान् ध्वजः पताका यत्र तम् । कल्पनाविभागेन रचनाचातुर्यकृतेन विभागेन उपनियतानि स्थापितानि निशितानि तीक्ष्णानि ज्वलि-तानि प्रदीप्तानि विविधानि बहुप्रकाराणि यान्यायुधानि शस्त्राणि तैः विराजितो-भयपार्श्वं उभयतः सम्भृतम् । पाण्डुकम्बलिनम् श्वेताऽऽस्तरणशालिनम् । देवाऽनी-केन देवसैन्येन । प्रत्युज्जगाम अभिययौ ।

अथ प्रववृते तत्र भीरूणां धृतिदारणः ।
अन्योन्यायुधनिष्पेषजर्जरावरणो रणः ॥४॥

अथेति। अथ तत्र भीरूणां घृतिदारणः अन्योन्यायुधनिष्पेषजर्जरावरणो रणः प्रववृते इत्यन्वयः।

अथ तत्र समुद्रतीरान्ते भीरूणां घृतिदारणः भीरुजनहृदयाकम्पी अन्योन्यं परस्परं भटानां आयुधनिष्पेषैः शस्त्रचूर्णनैः जर्जराणि आवरणानि लौहकवचानि यत्र सः तथाविधः रणः युद्धं प्रववृते ॥ ४ ॥

तिष्ठ नैवमितः पश्य क्वेदानीं मत्त मोक्ष्यसे।
प्रहरायं न भवसीत्येवं तेऽन्योन्यमार्दयन् ॥ ५ ॥

तिष्ठेति। नैवं तिष्ठ, इतः पश्य, मत् इदानीं क्व (यास्यसि), न मोक्ष्यसे, प्रहर, अयं न भवसि, इत्येवं ते अन्योन्यं आर्दयन् इत्यन्वयः।

नैवं तिष्ठ, एवं मा तिष्ठ, इतः पश्यः, सम्मुखमवलोकय, मत् मत् सकाशात् इदानीं क्व यास्यसि क्व गच्छसि, न मोक्ष्यसे, न मुञ्चामि, प्रहर, एहि प्रहारं कुरु, अयं न भवसि, अयं विलयं गच्छसि इत्येवं सदर्पाभिरुक्तिभिः ते भटाः अन्योन्यं परस्परं आर्दयन् अपीडयन् ॥ ५ ॥

ततः प्रवृत्ते तुमुले स्फूर्जत्प्रहरणे रणे।
पटहध्वनिनोत्कुष्टैः स्फुटतीव नभस्तलम् ॥ ६ ॥

तत इति। ततः तुमुले स्फूर्जत्प्रहरणे रणे प्रवृत्ते, पटहध्वनिना उत्कुष्टैः नभस्तलं स्फुटति इवेत्यन्वयः।

ततः किञ्चित्कालानन्तरं तुमुले सान्द्रे स्फूर्जन्ति सशब्दानि प्रहरणान्यायुधानि यत्र तस्मिन्, रणे युद्धे प्रवृत्ते सति प्रारब्धे सति, पटहध्वनिना ढक्काध्वानैः उत्कुष्टैः प्रतिध्वनितैः शब्दैः नभस्तलं गगनमण्डलं स्फुटतीव द्विधा भवति स्मेव। 'आनकः पटहो ढक्का' इत्यमरः ॥ ६ ॥

दानगन्धोद्धतामर्षेष्वापतत्सु परस्परम्।
युगान्तवाताकलितशैलभीमेषु दन्तिषु ॥ ७ ॥

दानगन्धेति। दानगन्धोद्धताऽमर्षेषु युगान्तवाताकलितशैलभीमेषु दन्तिषु परस्परं आपतत्सु सत्सु इत्यन्वयः।

दानगन्धेन मदजलसौरभेण उद्धतो वृद्धिं गतः अमर्षः क्रोधावेगः येषां तेषु, 'गण्डः कटो मदो दान' मित्यमरः। अत एव युगान्ते प्रलयकाले यो वातः

प्रभञ्जनः तेन आकलिताः संचालिताः ये शैलाः पार्वतास्तद्वत् भीमेषु भयानकेषु दन्तिषु गजेन्द्रेषु परस्परमन्योन्यं आपतत्सु युद्धतत्परेषु सत्सु । क्रियाऽन्वयस्तु चतुर्थश्लोके ॥ ७ ॥

विद्युल्लोलपताकेषु प्रसृतेषु समन्ततः ।
रथेषु पटुनिर्घोषेषूत्पाताम्बुधरेष्विव ॥ ८ ॥

विद्युदिति । विद्युल्लोलपताकेषु पटुनिर्घोषेषु उत्पाताम्बुधरेषु इव रथेषु समन्ततः प्रसृतेषु सत्सु इत्यन्वयः ।

विद्युदिव लोलाः चंचलाः पताकाः ध्वजा येषां तेषु अथवा विद्युदेव लीला पताका येषु तेषु पटुर्महान् निर्घोषः चक्रचक्रमध्वनिः घर्षणादिजन्यो ध्वनिर्वा येषां तेषु, उत्पाताम्बुधरेषु उत्पातमेघेष्विव रथेषु स्यन्दनेषु समन्ततः समराङ्गणमध्ये सर्वतः प्रसृतेषु परिभ्रमत्सु सत्सु ॥ ८ ॥

पात्यमानध्वजच्छत्रशस्त्रावरणमौलिषु ।
देवदानववीरेषु शितैरन्योन्यसायकैः ॥ ९ ॥

पात्यमानेति । शितैः अन्योन्यसायकैः पात्यमानध्वजच्छत्रशस्त्रावरणमौलिषु देवदानववीरेषु सत्सु इत्यन्वयः ।

शितैस्तीक्ष्णैः अन्योन्यसायकैः परस्परबाणैः पात्यमानाः स्रस्ताः ध्वजाः पताकाः, छत्राण्यातपत्राणि, शस्त्राण्यायुधानि, आवरणानि कवचानि, मौल्यः शिरांसि च येषां तेषु देवदानववीरेषु सुरासुरभटेषु सत्सु ॥ ९ ॥

अथ प्रतप्तासुरशस्त्रसायकैर्भयात्प्रदुद्राव सुरेन्द्रवाहिनी ।
रथेन विष्टभ्य बलं तु विद्विषां सुरेन्द्र एकः समरे व्यतिष्ठत ॥१०॥

अथेति । अथ प्रतप्तासुरशस्त्रसायकैः भयात् सुरेन्द्रवाहिनी प्रदुद्राव, एकः सुरेन्द्रस्तु रथेन विद्विषां बलं विष्टभ्य, समरे व्यतिष्ठत इत्यन्वयः ।

अथ तुमुले रणे प्रवृत्ते प्रतप्तैर्विषदिग्धैः असुराणां दानवानां शस्त्रैः आयुधैः सायकैः बाणैश्च, भयात् भीतिमग्ना सुरेन्द्रवाहिनी देवेन्द्रसेना प्रदुद्राव पलायनमकरोत्, एकः एकलः सुरेन्द्रस्तु बोधिसत्त्वात्मकः शक्रस्तु रथेन स्यन्दनेन विद्विषां असुराणां बलं सैन्यं विष्टभ्य अवरुध्य, समरे युद्धभूमौ व्यतिष्ठत स्थितोऽभूत् ॥१०॥

अभ्युदीर्णं त्वासुरं बलमतिहर्षोत्पटुतरोत्कृष्टक्ष्वेडितसिंहनादमभि-
पतितमभिसमीक्ष्य मातलिर्देवेन्द्ररथसारथिः स्वं च बलं पलायनपरमवेत्य-

पयानमत्र प्राप्तकालमिति मत्वा देवाधिपतेः स्यन्दनमावर्तयामास। अथ शक्रो देवेन्द्रः समुत्पततो रथस्याग्राभिमुखान्यभिघातपथागतानि शाल्मलीवृक्षे गरुडनीडान्यपश्यत्। दृष्ट्वैव च करुणया समालम्ब्यमानहृदयो मातलिं संग्राहकमित्युवाच—

पटुतरेति उच्चैः उत्कृष्टैः निर्घोषैः क्ष्वेडितैः मुहुरावर्तितः सिंहनादः विजयध्वनिर्येन तत्। अपयानं अपसरणम्। गरुडनीडानि गरुडाख्यपक्षिकुलायान्। संग्राहकं रथवाहरश्मिग्राहकं सूतमित्यर्थः।

अजातपक्षद्विजपोतसङ्कुला द्विजालयाः शाल्मलिपादपाश्रयाः।
अमी पतेयुर्न यथा रथेषया विचूर्णिता वाहय मे रथं तथा ॥११॥

अजातपक्षेति। अजातपक्षद्विजपोतसंकुलाः शाल्मलिपादपाश्रया अमी द्विजालयाः रथेषया विचूर्णिताः (सन्तः) यथा न पतेयुः तथा मे रथं वाहय इत्यन्वयः।

अजातपक्षाः अनुद्भिन्नपक्षतयः ये द्विजपोताः पक्षिशावकाः तैः संकुलाः व्याप्ताः शाल्मलिपादपाश्रयाः शाल्मलिवृक्षशाखावलम्बिनः अमी पुरोवर्तिनो द्विजालयाः पक्षिनीडानि रथेषया रथवेगेन सहसा विचूर्णिताः दलिताः (सन्तः) यथा न पतेयुः नाऽधः पतेयुः तथा मे रथं वाहय स्यन्दनं संचालय ॥११॥

मातलिरुवाच—अमी तावन्मार्ष समभियान्ति नो दैत्यसंघा इति। शक्र उवाच—ततः किम्। परिहरैतानि सम्यग्गरुडनीडानीति। अथैनं मातलिः पुनरुवाच—

मार्ष! साधो! दैत्यसंघा नोऽस्मान् प्रति समभियान्ति इत्यन्वयः। परिहर परिहरन् गच्छेत्यर्थः।

निवर्तनादस्य रथस्य केवलं शिवं भवेदम्बुरुहाक्ष पक्षिणाम्।
चिरस्य लब्धप्रसरा सुरेष्वसावभिद्रवत्येव तु नो द्विषच्चमूः ॥१२॥

निवर्तनादिति। हे अम्बुरुहाक्ष! अस्य रथस्य निवर्तनात् केवलं पक्षिणां (एव) शिवं भवेत्, सुरेषु चिरस्य लब्धप्रसरा असौ द्विषच्चमूस्तु नोऽभिद्रवत्येव इत्यन्वयः।

हे अम्बुरुहाक्ष! कमलनयन! अस्य रथस्य स्यन्दनस्य निवर्तनात् दूरतोऽपसार्य

मार्गान्तरेण गमनात् केवलं पश्चिगां गरुडशावकानां शिवं कल्याणं भवेत् भविता, सुरेषु देवेषु चिरस्य लब्धप्रसरा निरालम्बाऽवसरा असौ द्विषच्चमू राक्षसवाहिनी तु नोऽस्मान् प्रति अभिद्रवत्येव अभिधावत्येव । अयं भावः—पक्षिरक्षणाऽपेक्षया स्वात्मरक्षणमेव श्रेयस्करमित्यर्थः ॥१२॥

अथ शक्रो देवेन्द्रः स्वमध्याशयातिशयं सत्वविशेषं च कारुण्यविशेषात्प्रकाशयन्नुवाच—

स्वमध्याशयातिशयं स्वहृद्गतमाशयम् । सत्वविशेषं सत्वगुणोद्रेकम् ।

तस्मान्निवर्तय रथं वरमेव मृत्यु—
दैत्याधिपप्रहितभीमगदाभिघातैः ।
धिग्वाददग्धयशसो न तु जीवितं मे
सत्त्वान्यमूनि भयदीनमुखानि हत्वा ॥ १३ ॥

तस्मादिति । तस्माद् रथं निवर्तय दैत्याधिपप्रहितभीमगदाभिघातैर्मृत्युरेव वरम्, भयदीनमुखानि अमूनि सत्त्वानि हत्वा वाददग्धयशसो मे जीवितं तु धिक् न (किमु) इत्यन्वयः ।

तस्माद्रथं तावन्निवर्तय परावर्तय, दैत्याधिपप्रहितैर्दैत्यराजविहितैर्भीमैः भयङ्करैर्गदाऽभिघातैः मृत्युरेव वरं, मरणमेव ज्यायः, भयदीनमुखानि भीतिदीनाननानि अमूनि सत्त्वानि प्राणिनो हत्वा रथवेगेन संचूर्ण्य, वादोऽपकीर्तिस्तया दग्धयशसो मलिनयशसो मे जीवितं तु जीवनं तु धिक् अस्तु न किमु ? ॥१३॥

अथ मातलिस्तथेति प्रतिश्रुत्य तुरगसहस्रयुक्तं स्यन्दनमस्य निवर्तयामास ।

दृष्टावदाना रिपवस्तु तस्य युद्धे समालोक्य रथं निवृत्तम् ।
भयद्रुताः प्रस्खलिताः प्रणेशुर्वाताभिनुन्ना इव कालमेघाः ॥१४॥

दृष्टावदाना इति । दृष्टावदाना रिपवस्तु युद्धे निवृत्तं तस्य रथं समालोक्य वाताभिनुन्नाः कालमेघा इव भयद्रुताः प्रस्खलिताः (सन्तः) प्रणेशुः इत्यन्वयः ।

दृष्टावदानाः अनुभूतपराक्रमाः । 'अवदानं कर्मवृत्त' मित्यमरः । रिपवश्शत्रवः असुरास्तु युद्धे समराङ्गणे निवृत्तं पुनरायान्तं तस्य देवेन्द्रस्य रथं समालोक्य दृष्ट्वा, वातेन अभिनुन्नाः प्रेरिताः कालमेघाः उत्पातजलदा इव भयेन द्रुताः व्याकुलाः प्रस्खलिताः विनष्टबलाः (सन्तः) प्रणेशुः नम्रीभावं स्वीचक्रुः ॥१४॥

भग्ने स्वसैन्ये विनिवर्तमानः पन्थानमावृत्य रिपुध्वजिन्याः ।
सङ्कोचयत्येव मदावलेपमेकोऽप्यसम्भाव्यपराक्रमत्वात् ॥१५॥

भग्न इति । स्वसैन्ये भग्ने ( सति ) रिपुध्वजिन्याः पन्थानमावृत्य विनिवर्तमानः एकोऽपि असंभाव्यपराक्रमत्वात् मदावलेपं संकोचयत्येव इत्यन्वयः ।

स्वसैन्ये स्वबले भग्ने निर्बले संजातेऽपि रिपुध्वजिन्याः शत्रुसेनायाः पन्थानमावृत्य मार्गमवरुध्य, विनिवर्तमानः पुनः संमुखीभूतः एकोऽपि वीरः असंभाव्यपराक्रमत्वात् एकस्यैव अभिमुखत्वे तत्पराक्रमाऽतिशयसंभावना अनेकेषामपि मदावलेपं गर्वमदं संकोचयत्येव लघूकरोत्येव ॥१५॥

निरीक्ष्य भग्नं तु तदासुरं बलं सुरेन्द्रसेनाप्यथ सा न्यवर्तत ।
बभूव नैव प्रणयः सुरद्विषां भयद्रुतानां विनिवर्तितुं यतः ॥१६॥

निरीक्ष्येति । अथ तदासुरं बलं तु भग्नं निरीक्ष्य सा सुरेन्द्रसेनाऽपि न्यवर्तत, यतः भयद्रुतानां सुरद्विषां विनिवर्तितुं प्रणयो नैव बभूवेत्यन्वयः ।

अथ ततः तत् आसुरं बलं दानवसैन्यं तु भग्नं भग्नपराक्रममत एव निरुत्साहं च निरीक्ष्य अवलोक्य, सा सुरेन्द्रसेना देवराजवरूथिनी अपि न्यवर्तत, पुनरभिययौ, यतः यस्मात् सेनायाः पुनरभिमुखीभावात् भयद्रुतानां भयपलायितानां सुरद्विषां राक्षसानां विनिवर्तितुं पुनः सम्मुखीभूय योद्धुं प्रणयः प्रेम वाञ्छा वा नैव बभूव नैवाऽजनिष्ट ॥१६॥

सहर्षलज्जैस्त्रिदशैः सुराधिपः सभाज्यमानोऽथ रणाजिराच्छनैः ।
अभिज्वलच्चारुवपुर्जयश्रिया समुत्सुकान्तःपुरमागमत्पुरम् ॥१७॥

सहर्षलज्जैरिति । अथ सहर्षलज्जैः त्रिदशैः सभाज्यमानः सुराधिपः जयश्रिया अभिज्वलच्चारुवपुः रणाजिरात् शनैः समुत्सुकान्तःपुरं पुरं आगमत् इत्यन्वयः ।

अथाऽनन्तरं हर्षसहिता लज्जा येषां तैः सहर्षलज्जैः, विजयेन हर्षः, रणाङ्गणात्पलायनेन च लज्जा । त्रिदशैः देवैः सभाज्यमानः सत्क्रियमाणः सुराधिपः देवेन्द्रः जयश्रिया विजयलक्ष्म्या अभिज्वलत् शोभमानं चारु स्वभावसुन्दरं वपुः शरीरं यस्य सः तथाविधः सन् रणाऽजिरात् रणाङ्गणात् शनैः मन्दमन्दं समुत्सुकमुत्कण्ठितमन्तःपुरं अन्तःपुरवासी जनो यस्य तत् पुरं नगरं आगमत् प्राप ॥१७॥

एवं स एव तस्य संग्रामस्य विजयो बभूव। तस्मादुच्यते।

पापं समाचरति वीतघृणो जघन्यः
प्राप्यापदं सघृण एव तु मध्यबुद्धिः।
प्राणात्ययेऽपि तु न साधुजनः स्ववृत्तिं
वेलां समुद्र इव लङ्घयितुं समर्थः ॥१८॥

❀ इति शक्रजातकम् ❀

पापमिति। वीतघृणो जघन्यः (नियमेन) पापं समाचरति, सघृण एव मध्यबुद्धिस्तु आपदं प्राप्य (कदाचित्) पापं समाचरति, साधुजनस्तु प्राणात्ययेऽपि समुद्रो वेलामिव स्ववृत्तिं लङ्घयितुं न समर्थो (भवति) इत्यन्वयः।

वीतघृणः अपगतकरुणः। 'कारुण्यं करुणा घृणा' इत्यमरः। जघन्यः नीचजनस्तावत् नियमेन पापं पापकर्म संपदि विपदि वा समाचरति करोत्येव, सघृण एव सकरुणोऽपि मध्यबुद्धिः मध्यमविचारवान् जनस्तु आपदं प्राप्य आपदि गत्यन्तराऽलाभे सति कदाचित् पापं समाचरति, साधुजनस्तु उत्तमजनस्तु प्राणात्ययेऽपि प्राणभये समुपस्थितेऽपि समुद्रः सागरो वेलां तीरमर्यादामिव स्ववृत्तिं साधुतां पापपराङ्मुखत्वरूपां लङ्घयितुमतिवर्तितुं समर्थो न भवति। उपमालङ्कारः ॥१८॥

तदेवं देवराज्यं प्राणानपि परित्यज्य दीर्घरात्रं परिपालितानि भगवता सत्त्वानि। तेष्विह प्राज्ञस्याघातो न युक्तरूपः प्रागेव विप्रतिपत्तिरिति प्राणिषु दयायत्तेनार्येण भवितव्यम्। तथा हि धर्मो ह वै रक्षति धर्मचारिणमित्यत्राप्युन्नेयम्। तथागतवर्णे सत्कृत्य धर्मश्रवणे चेति ॥

दीर्घरात्रं चिरकालपर्यन्तम्। तेषु पापकर्मसु प्राज्ञस्य साधुजनस्य आघातः पतनं न युक्तरूपः अयोग्यम्। प्रागेव विप्रतिपत्तिः पूर्वमेव संसारे विरोधोऽनुभूयत इति हेतोर्दयायत्तेन आर्येण भवितव्यमित्यन्वयः।

'धर्मो ह वै' इत्यादि ग्रन्थोक्तमनुसन्धेयमिति। तथागतवर्णे भगवतः सुगतस्य माहात्म्ये सत्कृत्य धर्मश्रवणे चाऽवहितेन भाव्यमिति भावः।

❀ इति शक्रजातकम् ❀

—:०:—

## अथ ब्राह्मणजातकम् ।

आत्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्ति तद्यथानुश्रूयते। बोधिसत्त्वः किल कस्मिंश्चिदनुपक्रुष्टगोत्रचारित्रे स्वधर्मानुवृत्तिप्रकाशयशसि विनयाचारश्लाघिनि महति ब्राह्मणकुले जन्मपरिग्रहं चकार। स यथाक्रमं गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्मादिभिः कृतसंस्कारक्रमो वेदाध्ययननिमित्तं श्रुताभिजनाचारसम्पन्ने गुरौ प्रतिवसति स्म।

आत्मलज्जया आत्मसंमानरिरक्षिषया एव सत्पुरुषाः साधवः आचारवेलां आचारमर्यादां न लङ्घयन्ति, नाऽतिक्रामन्ति। अनुपक्रुष्टं अनिन्दितं गोत्रं कुलं चरित्रं शीलं च यस्य तस्मिन्। गर्भाधानं, पुंसवनं तृतीयादिपञ्चमान्तेषु मासेषु विधेयः संस्कारः, अष्टमे मासि सीमन्तोन्नयनं, उत्पत्त्यनन्तरं जातकर्मं, एतदादिभिः आदिशब्दात् चौल-यज्ञोपवीतादिभिः। श्रुताऽभिजनाचारसम्पन्ने शास्त्र-कुल-शीलसम्पन्ने।

तस्य श्रुतग्रहणधारणपाटवं च भक्त्यन्वयश्च सततं स्वकुलप्रसिद्धः।
पूर्वे वयस्यपि शमाभरणा स्थितिश्च प्रेमप्रसादसुमुखं गुरुमस्य चक्रुः ॥ १ ॥

तस्येति। तस्य श्रुतग्रहणधारणपाटवं स्वकुलप्रसिद्धः सततं भक्त्यन्वयश्च, पूर्वे वयसि अपि शमाभरणा स्थितिश्च अस्य गुरुं प्रेमप्रसादसुमुखं चक्रुः इत्यन्वयः।

तस्य बोधिसत्त्वात्मनो द्विजसुतस्य श्रुतस्य ग्रहणे गुरोः शास्त्रतत्त्वाधिगमे तस्य धारणे च यत् पाटवं कुशलत्वं, स्वकुलप्रसिद्धः स्वकुलपरम्परायातः सततं निरन्तरं भक्त्यन्वयः गुरुभक्तिपरता च, पूर्वे वयसि बाल्ये वयस्यपि शमः शान्तिरेव आभरणं आभूषणं यस्याः सा स्थितिः शीलक्रमश्च अस्य गुरुं प्रेम्णा अनुरागेण यः प्रसादः प्रसन्नता तेन सुमुखं संतुष्टं चक्रुः ॥ १ ॥

वशीकरणमन्त्रा हि नित्यमव्याहता गुणाः।
अपि द्वेषाग्नितप्तानां किं पुनः स्वस्थचेतसाम् ॥ २ ॥

वशीकरणमन्त्रा इति। हि नित्यं अव्याहता गुणाः द्वेषाग्नितप्तानामपि वशीकरणमन्त्राः ( भवन्ति ), स्वस्थचेतसां पुनः किम्? इत्यन्वयः।

अयं भावः—उत्तमाः खलु गुणाः सर्वानपि अनुकूलान् विरोधिनो वा आवर्जयन्ति इति ॥ २ ॥

अथ तस्याध्यापकः सर्वेषामेव शिष्याणां शीलपरीक्षानिमित्तं स्वाध्यायविश्रामकालेष्वात्मनो दारिद्र्यदुःखान्यभीक्ष्णमुपवर्णयामास ।

शीलपरीक्षानिमित्तं मनोवृत्तिजिज्ञासया । स्वाध्यायेति अनध्यायदिवसेष्वित्यर्थः । अभीक्ष्णं पुनः पुनः ।

स्वजनेऽपि निराक्रन्दमुत्सवेऽपि हतानन्दम् ।
धिक्प्रदानकथामन्दं दारिद्र्यमफलच्छन्दम् ॥ ३ ॥

स्वजनेऽपीति । स्वजनेऽपि निराक्रन्दं उत्सवेऽपि हतानन्दं प्रदानकथामन्दं अफलच्छन्दं दारिद्र्यं धिक् अस्तु इत्यन्वयः ।

स्वजने आत्मीयजनेऽपि निराक्रन्दं पक्षपातरहितं निर्बलत्वात्, उत्सवे आनन्दावसरेऽपि हतानन्दं बाधितप्रहर्षं, प्रदानकथायां सुदानव्यापारेषु मन्दं मांद्यकारि अफलच्छन्दं निष्फलं दारिद्र्यं निःस्वतां धिगस्तु । अनुष्टुप्भेदः ॥ ३ ॥

परिभवभवनं श्रमास्पदं सुखपरिवर्जितमत्यनूर्जितम् ।
व्यसनमिव सदैव शोचनं धनविकलत्वमतीव दारुणम् ॥४॥

परिभवभवनमिति । परिभवभवनं श्रमास्पदं सुखपरिवर्जितं अतिअनूर्जितं व्यसनमिव सदैव शोचनं धनविकलत्वं अतीव दारुणं भवतीत्यन्वयः ।

परिभवभवनं पराजयसदनं श्रमास्पदं क्लेशावहं सुखपरिवर्जितं सुखरहितं अत्यनूर्जितं अधःपातकारि, व्यसनमिव आपदिव सदैव शोचनं शोच्यतमं धनविकलत्वं इदं दारिद्र्यं अतीव दारुणं दुःसहं भवतीति शेषः । अपरवक्त्रं वृत्तम् ॥४॥

अथ ते तस्य शिष्याः प्रतोदसंचोदिता इव सदश्वा गुरुस्नेहात्समुपजातसंवेगाः सम्पन्नतरं प्रभूततरं च भैक्षमुपसंहरन्ति स्म । स तानुवाच-अलमनेनात्र भवतां परिश्रमेण । न भैक्षोपहाराः कस्यचिद्दारिद्र्यक्षामतां क्षपयन्ति । अस्मत्परिक्लेशामर्षिभिस्तु भवद्भिरयमेव यत्नो धनाहरणं प्रति युक्तः कर्तुं स्यात् । कुतः

प्रतोदसंचोदिताः कशया ताडिताः समुपजातसंवेगाः संजातदुःखाः भैक्ष्यं भिक्षाकम्यमन्नादि । दारिद्र्येण क्षामतां कृशताम् । परिक्लेशामर्षिभिः क्लेशाऽसहिष्णुभिः ।

क्षुधमन्नं जलं तर्षं मन्त्रवाक्साऽगदा गदान् ।
हन्ति दारिद्र्यदुःखं तु सन्तत्याराधनं धनम् ॥ ५ ॥

क्षुधमिति । अन्नं क्षुधं हन्ति, जलं तर्षं हन्ति, साऽगदा मन्त्रवाक् गदान् हन्ति, दारिद्र्यदुःखं तु संतत्याराधनं धनं च हन्ति इत्यन्वयः ।

अन्नं क्षुधं बुभुक्षां हन्ति शमयति, जलं तोयं तर्षं तृष्णां पिपासां हन्ति अपनयति, अगदैरौषधिविशेषैः सहिता मन्त्रवाक् मन्त्रात्मिका वाणी गदान् व्याधीन् हन्ति, दारिद्र्यदुःखं तु निर्धनत्वदुःखं तावत् सन्ततीनां आराधनं सम्यक् पालनं धनं च कर्तृ हन्ति नाशयति, सम्यक् शिक्षिताः संततयो दारिद्र्यदोषं मार्जयितुं प्रभवन्तीति भावः ॥ ५ ॥

शिष्या ऊचुः—किं करिष्यामो मन्दभाग्या कथं यद्देवावान्नः शक्तिप्रयामः । अपि च ।

शक्तिप्रयामः सामर्थ्यप्रसरः ।

भैक्षवद्यदि लभ्येरन्नुपाध्याय धनान्यपि ।
नेदं दारिद्र्यदुःखं ते वयमेवं सहेमहि ॥ ६ ॥

भैक्षवदिति । हे उपाध्याय ! यदि भैक्षवत् धनान्यपि लभ्येरन्, (तदा) एवं ते इदं दारिद्र्यदुःखं वयं न सहेमहि इत्यन्वयः ।

अयं भावः—यदि भैक्ष्यान्नवत् धनमपि न लभ्यते क्वचित्, तर्हि अस्माभिस्तव दारिद्र्यं निर्मूलमपि कर्तुं शक्यते इति ॥ ६ ॥

प्रतिग्रहकृशोपायं विप्राणां हि धनार्जनम् ।
अप्रदाता जनश्चायमित्यगत्या हता वयम् ॥ ७ ॥

प्रतिग्रहेति । हि विप्राणां धनार्जनं प्रतिग्रहकृशोपायं ( भवति ) अयं जनश्च अप्रदाता इति अगत्या वयं हताः ( स्मः ) इत्यन्वयः ।

हि यतः किल विप्राणां ब्राह्मणानां धनार्जनं द्रव्यागमः प्रतिग्रहः दानमेव कृशोऽल्पतर उपायः साधनं यस्य तथाविध भवतीति शेषः । दानैकजीवनवृत्तयो ब्राह्मणा इति भावः । अयं प्रजाजनश्च अप्रदाता अदानशीलः वर्तते इति हेतोरगत्या अनुपायतया वयं हताः स्मः विषीदामः ॥ ७ ॥

अध्यापक उवाच—सन्त्यन्येऽपि शास्त्रदृष्टा धनार्जनोपायाः ।

जरानिष्पीतसामर्थ्यास्तु वयमयोग्यरूपास्तत्प्रतिपत्तौ । शिष्या ऊचुः—वयमुपाध्याय जरयाऽनुपहतपराक्रमाः । तद्यदि नस्तेषां शास्त्रविहितानामुपायानां प्रतिपत्तिसहतां मन्यसे तदुच्यताम् । यावदध्यापनपरिश्रमस्यानृण्यं ते गच्छाम इति । अध्यापक उवाच—तरुणैरपि व्यवसायशिथिलहृदयैर्दुरभिसम्भवाः खल्वेवंविधा धनार्जनोपायाः । यदि त्वयमत्र भवतां निर्बन्धः । तच्छ्रूयतां साधुः कतम एको धनोपार्जनक्रमः ।

जरानिष्पीतसामर्थ्याः जराऽपहृतबलाः । तत्प्रतिपत्तौ तदनुष्ठाने । प्रतिपत्तिसहतां अनुष्ठानयोग्यत्वम् । व्यवसायशिथिलहृदयैः उद्योगपराङ्मुखैः । निर्बन्धः आग्रहः । साधुः श्रेष्ठः ।

आपद्धर्मः स्तेयमिष्टं द्विजानामापच्चान्त्या निःस्वता नाम लोके ।
तस्माद्भोज्यं स्वं परेषामदुष्टैः सर्वं चैतद्ब्राह्मणानां स्वमेव ॥ ८ ॥

आपद्धर्म इति । द्विजानां आपद्धर्मः स्तेयमिष्टं, लोके निःस्वता च अन्त्या आपत् नाम, तस्माददुष्टैः परेषां स्वं भोज्यं, ब्राह्मणानां चैतत् सर्वं स्वमेव (भवति) इत्यन्वयः ।

द्विजानां ब्राह्मणानां आपद्धर्मः आपत्काले अनुष्ठेयः धर्मः स्तेयं परद्रव्यापहरणं इष्टं संमतं प्राचीनानामाचार्याणामिति शेषः । लोके संसारे निःस्वता दरिद्रता च अन्त्या सर्वाधिका आपत् अस्ति नामेति संभावनायाम् । तस्मादापत्पतितैः अदुष्टैः केवलं जीवननिर्वाहकाङ्क्षिभिः परेषामन्येषां स्वं द्रव्यं भोज्य स्वीकरणीयम् । ब्राह्मणानां द्विजानां च एतत् सर्वं परकीयं द्रव्यं स्वमेव स्वद्रव्यमेव भवतीति भावः ॥ ८ ॥

कामं प्रसह्याऽपि धनानि हर्तुं शक्तिर्भवेदेव भवद्विधानाम् ।
न त्वेष योगः स्वयशो हि रक्ष्यं शून्येषु तस्माद्व्यवसेयमेव ॥ ९ ॥

काममिति । प्रसह्याऽपि कामं धनानि हर्तुं भवद्विधानां शक्तिर्भवेदेव, एष योगस्तु न (अस्ति), हि स्वयशो रक्ष्यमेव, तस्मात् शून्येषु एव व्यवसेयमित्यन्वयः ।

प्रसह्याऽपि बलादपि कामं यथेच्छं धनानि परद्रव्याणि हर्तुमपहर्तुं भवद्विधानां तरुणानां शक्तिर्भवेदेव, सामर्थ्यमस्त्येव, किन्तु एष योगः एष मार्गस्तु न न ममाभीष्टः इत्यर्थः । हि यतः स्वयशोरक्ष्यमेव स्वकीर्तिरकलङ्का रक्षणीयैव, तस्मात् शून्येषु शान्तेषु स्थानेषु एव सुगुप्तं निशीति यावत् व्यवसेयं, द्रव्याहरणं विधेयमिति ॥ ९ ॥

इति मुक्तप्रग्रहास्तेन ते छात्राः परममिति तत्तस्य वचनमयुक्तमपि युक्तमिव प्रत्यश्रौषुरन्यत्र बोधिसत्त्वात् ।

मुक्तप्रग्रहाः मुक्तबन्धनाः । परमं सत्यम् । प्रत्यश्रौषुः स्वीचक्रुः । अन्यत्र बोधिसत्त्वात् बोधिसत्त्वं विहाय ।

स हि प्रकृतिभद्रत्वात्तन्नोत्सेहेऽनुमोदितुम् ।
कृत्यवत्प्रतिपन्नं तैर्व्याहन्तुं सहसैव तु ॥१०॥

सहीति । स हि प्रकृतिभद्रत्वात् तत् अनुमोदितुं न उत्सहे, तैस्तु व्याहन्तुं सहसैव तत् कृत्यवत् प्रतिपन्नमित्यन्वयः ।

स हि स खलु बोधिसत्त्वः प्रकृत्या निसर्गेण भद्रत्वात् शीलसंपन्नत्वात् हेतोः तत् गुरोरनुशासनं अनुमोदितुं प्रशंसितुं नोत्सेहे न उपाक्रमत, तैस्तु इतरैः शिष्यैः व्याहन्तुं सन्मार्गमुल्लङ्घयितुं सहसैव तत् गुर्वनुशासनं कृत्यवत् सुकृत्यवत् प्रतिपन्नं स्वीकृतम् ॥१०॥

व्रीडावनतवदनस्तु बोधिसत्त्वो मृदु विनिश्वस्य तूष्णीमभूत् । अथ स तेषामध्यापको बोधिसत्त्वमवेक्ष्य तं विधिमनभिनन्दन्तमप्रतिक्रोशन्तं निविष्टगुणसम्भावनस्तस्मिन्महासत्त्वे किं नु खल्वयमव्यवसितत्वान्निःस्नेहतया वा मयि स्तेयं न प्रतिपद्यते । उताऽधर्मसञ्ज्ञयेति समुत्पन्नविमर्शस्तत्स्वभावव्यक्तीकरणार्थं बोधिसत्त्वमुवाच—भो महाब्राह्मण !

मृदु मन्दम् । तं विधिं तामाज्ञां अनभिनन्दन्तं अप्रशंसन्तं, अप्रतिक्रोशन्तं अनिन्दन्तं उदासीनमित्यर्थः । निविष्टगुणसम्भावनः सम्भावितगुणलाभः । अव्यवसितत्वात् अनुत्सुकत्वात् । अधर्मसंज्ञया अधर्माऽऽशङ्कया ।

अमी द्विजा मद्व्यसनासहिष्णवः समाश्रिता वीरमनुष्यपद्धतिम् ।
भवाननुत्साहजडस्तु लक्ष्यते न नूनमस्मद्व्यसनेन तप्यते ॥११॥

अमीति । मद्व्यसनाऽसहिष्णवः अमी द्विजाः वीरमनुष्यपद्धतिं समाश्रिताः ( सन्ति ), भवांस्तु अनुत्साहजडो लक्ष्यते, ( अतः ) नूनं अस्मद्व्यसनेन न तप्यते इत्यन्वयः ।

मद्व्यसनं या ममाऽऽपच्चिद्रारिद्र्यरूपा तस्या असहिष्णवः असहनशीलाः अमी एते द्विजाः ब्राह्मणाः वीरमनुष्यपद्धतिं वीरः आपत्कालेऽपि सुमार्गदर्शी कुशलः

मनुष्यस्तस्य पद्धतिं सरणिं स्तेयसमाश्रयेण समाश्रिताः सन्ति अनुसरन्ति, भवांस्तु एकः अनुत्साहजडः अनुत्साहशिथिलः लक्ष्यते दृश्यते, अतः नूनं (भवता) अस्मद्व्यसनेन ममापदा न तप्यते दुःखिना न भूयते। भवानेवैकोऽत्र पराङ्मुखो निःस्नेह इव लक्ष्यत इति भावः ॥११॥

परिप्रकाशेऽप्यनिगूढविस्तरे मयात्मदुःखे वचसा विदर्शिते।
कथं नु निःसम्भ्रमदीनमानसो भवानिति स्वस्थवदेव तिष्ठति ॥१२॥

परिप्रकाश इति। मया अनिगूढविस्तरे परिप्रकाशेऽपि आत्मदुःखे वचसा विदर्शिते सति, निःसम्भ्रमदीनमानसो भवान् कथं नु इति स्वस्थवदेव तिष्ठति इत्यन्वयः।

मया अनिगूढः अनाच्छन्नः विस्तरो यस्य तस्मिन् स्वल्पतरविस्तरे अत एव परिप्रकाशेऽपि सुस्पष्टेऽपि आत्मदुःखे स्वदैन्ये वचसा विदर्शिते प्रकटिते सति, निःसंभ्रमदीनमानसः निर्विकारतया उदासीनः भवान् कथं नु इति कथमेवं स्वस्थवत् निश्चिन्तवदेव तिष्ठति ॥१२॥

अथ बोधिसत्त्वः ससम्भ्रमोऽभिवाद्योपाध्यायमुवाच—शान्तं पापम्। न खल्वहं निःस्नेहकठिनहृदयत्वादपरितप्यमानो गुरुदुःखैरेवमवस्थितः किन्त्वसम्भवादुपाध्यायप्रदर्शितस्य क्रमस्य। नहि शक्यमदृश्यमानेन कचित्पापमाचरितुम्। कुतः। रहोऽनुपपत्तेः।

अभिवाद्य नमस्कृत्य। उपाध्यायप्रदर्शितस्य क्रमस्य प्रकारस्य। अदृश्यमानेन अनवलोक्यमानेन। रहोऽनुपपत्तेः, एकान्तस्यैवाऽभावात्।

नास्ति लोके रहो नाम पापं कर्म प्रकुर्वतः।
अदृश्यानि हि पश्यन्ति ननु भूतानि मानुषान् ॥१३॥

नास्तीति। लोके पापं कर्म प्रकुर्वतः रहो नाम नाऽस्ति, हि अदृश्यानि भूतानि मानुषान् पश्यन्ति ननु इत्यन्वयः।

लोके संसारे पापं कर्म प्रकुर्वतो दुष्कर्माणि समाचरतः जनस्य रहो नाम एकान्तस्तावत् नास्त्येव, हि यतः अदृश्यानि अरूपाणि भूतानि देवताविशेषाः मानुषान् मनुष्यान् पश्यन्ति ननु अवलोकयन्ति किल ॥१३॥

कृतात्मानश्च मुनयो दिव्योन्मिषितचक्षुषः।
तानपश्यन्नहोमानी बालः पापे प्रवर्तते ॥१४॥

कृतात्मान इति। दिव्योन्मिषितचक्षुषः कृतात्मानः मुनयश्च तान् अपश्यन्, रहोमानो बालः पापे प्रवर्तते इत्यन्वयः।

दिव्यमलौकिकं उन्मिषितं उन्मीलितं चक्षुर्येषां ते परोक्षदर्शिनः कृतात्मानः आत्मस्वरूपज्ञा मुनयश्च महर्षयश्च तान् अदृश्यान् देवताविशेषान् अपश्यन् प्रत्यक्षीचक्रुः, रहोमानी रहः एकान्तं मनुते इति रहोमानी एकान्तदर्शी बालो बालिशः पापे पापकर्मणि प्रवर्तते प्रवृत्तो भवति ॥१४॥

अहं पुनर्न पश्यामि शून्यं क्वचन किञ्चन।
यत्राऽप्यन्यं न पश्यामि नन्वशून्यं मयैव तत् ॥१५॥

अहमिति। अहं पुनः क्वचन (अपि) किञ्चन शून्यं न पश्यामि, यत्राऽपि अन्यं न पश्यामि, तत् खलु मयैव अशून्यं (अस्ति) ननु।

अहं पुनः क्वचन अपि कुत्राऽपि किंचन किंचिदपि शून्यं रिक्तं न पश्यामि, यत्राऽपि अन्यं द्वितीयं न पश्यामि नावलोकयामि तत् खलु मयैव अशून्यं सद्वितीयं अस्ति ननु। यत्राऽन्यो न भवति तत्र स्वस्याऽन्तरात्मा एव कर्माऽकर्मणोः साक्षीति भावः ॥१५॥

परेण यच्च दृश्येत दुष्कृतं स्वयमेव वा।
सुदृष्टतरमेतत्स्याद्दृश्यते स्वयमेव यत् ॥१६॥

परेणेति। यच्च दुष्कृतं परेण दृश्येत, स्वयमेव वा दृश्येत, (तयोर्मध्ये) स्वयमेव तत् दृश्यते एतत् सुदृष्टतरं स्यात् इत्यन्वयः।

अयं भावः—दुष्कृतं द्विविधं भवति स्व-परदृष्टं, स्वदृष्टं च तयोर्मध्ये परैरदृष्टं केवलमात्मना दृष्टमेव सम्यक् स्मरणहेतुर्भवति, अन्तरात्मनस्तत्र साक्षित्वात् इति।

स्वकार्यपर्याकुलमानसत्वात्पश्येन्न वाऽन्यश्चरितं परस्य।
रागार्पितैकाग्रमतिः स्वयं तु पापं प्रकुर्वन्नियमेन वेत्ति ॥१७॥

स्वकार्येति। अन्यः स्वकार्यपर्याकुलमानसत्वात् परस्य चरितं पश्येत् न वा, रागार्पितैकाग्रमतिः पापं प्रकुर्वन् स्वयं तु नियमेन वेत्ति इत्यन्वयः।

अन्यः परो जनः स्वकार्यपर्याकुलं स्वव्यापारैकसक्तं मानसं यस्य तस्य भावस्तस्मात् परस्य अन्यस्य कस्यचित् चरितं व्यापारं पश्येत् न वा अवलोकयेत् न वा, परकर्मणि न खलु जनाः सर्वदा दत्तावधाना भवन्ति। रागेण आसक्त्या अर्पिता

योजिता एकाग्रा एकताना मतिर्येन सः पापं प्रकुर्वन् स्वार्थसाधनाय नीचकर्म समाचरन् स्वयं तु कर्ता तावत् नियमेन निश्चयेन वेत्ति अनुभवतीति प्रत्यक्षसिद्धमेतत् । तस्मात् स्वकर्मसु परापेक्षया स्वस्यैव साक्षित्वमधिकमिति भावः ॥ १७॥

तदनेन कारणेनाहमेवं व्यवस्थित इति । अथ बोधिसत्त्वः समभिप्रसादितमनसमुपाध्यायमवेत्य पुनरुवाच—

एवमिति उदासीन इत्यर्थः । अवेत्य ज्ञात्वा ।

न चात्र मे निश्चयमेति मानसं धनार्थमेवं प्रतरेद्भवानपि ।
अवेत्य को नाम गुणाऽगुणान्तरं गुणोपमर्दं धनमूल्यतां नयेत् ॥१८॥

न चात्रेति । अत्र च मे मानसं निश्चयं नैति, (यत्) भवानपि एवं धनार्थं प्रतरेत् । को नाम गुणाऽगुणान्तरं अवेत्य गुणोपमर्दं धनमूल्यतां नयेत् इत्यन्वयः ।

अत्र च विषये मे मम मानसं निश्चयं नैति निर्णयं नोपैति, यत् भवानपि भवादृशः पण्डितवरोऽपि एवमनया स्तेयरीत्या धनार्थे द्रविणसंग्रहाय प्रतरेत् आचरेत् को नाम कः खलु सुधीर्जनः गुणाऽगुणयोः सद्गुणदुर्गुणयोरन्तरं तारतम्यं अवेत्य विचार्य गुणस्य सद्गुणस्य शीलरूपस्य उपमर्दं विनाशं धनमूल्यतां नयेत् सद्गुणविनिमयेन धनं गृह्णीयात् ॥१८॥

स्वाभिप्रायं खलु निवेदयामि ।

कपालमादाय विवर्णवाससा वरं द्विषद्वेश्मसमृद्धिरीक्षिता ।
व्यतीत्य लज्जां न तु धर्मवैशसे सुरेन्द्रतार्थेऽप्युपसंहृतं मनः ॥१९॥

कपालमिति । विवर्णवाससा कपालमादाय द्विषद्वेश्मसमृद्धिरीक्षिता वरं, धर्मवैशसे तु लज्जां व्यतीत्य सुरेन्द्रतार्थेऽपि उपसंहृतं मनः न वरमित्यन्वयः ।

विवर्णं मलिनवर्णं यत् वासः वस्त्रं कर्पटादि वर्तते यस्य तेन कर्पटशेषसमृद्धिमता कपालमादाय भिक्षापात्रमवलम्ब्य द्विषतां शत्रूणां वेश्मसमृद्धिः गृहसम्पत्तिरीक्षिता दृष्टा वरं श्रेष्ठतरं तद्दर्शनमिति यावत् । धर्मवैशसे धर्मनाशे तु लज्जां व्यतीत्य निर्लज्जतया सुरेन्द्रतार्थे देवेन्द्रपदप्राप्त्यर्थमपि उपसंहृतं आसक्तं मनः न वरं न योग्यम् ॥१९॥

अथ तस्योपाध्यायः प्रहर्षविस्मयाक्षिप्तहृदय उत्थायासनात्सम्परिष्वज्यैनमुवाच—साधु साधु पुत्रक ! साधु साधु महाब्राह्मण ! प्रतिरूपमेतत्ते प्रशमालङ्कृतस्यास्य मेधाविकृत्य ।

सम्परिष्वज्य समालिङ्गय। प्रशमः इन्द्रियदमः। मेधाविकस्य मेधाविनः।

निमित्तमासाद्य यदेव किञ्चन स्वधर्ममार्गं विसृजन्ति बालिशाः।
तपःश्रुतज्ञानधनास्तु साधवो न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ॥२०॥

निमित्तमिति। यदेव किञ्चन निमित्तमासाद्य बालिशाः स्वधर्ममार्गं विसृजन्ति तपःश्रुतज्ञानधनाः साधवस्तु परमेऽपि कृच्छ्रे विक्रियां न यान्ति इत्यन्वयः।

अयं भावः—यत्किञ्चिदपि आतपत्वलादिरूपं निमित्तं पुरस्कृत्य मूर्खाः स्वार्थान्धाः सन्तः स्वधर्मनियममपि जहति, तत्त्वदर्शिनो धीरास्तु परमापदि अपि स्वमार्गं न मुञ्चन्तीति ॥२०॥

त्वया कुलं सममलमभ्यलङ्कृतं समुद्यता नभ इव शारदेन्दुना।
तवार्थवत्सुचरितविश्रुतं श्रुतं सुखोदयः सफलतया श्रमश्च मे ॥२१॥

त्वयेति। समुद्यता शारदेन्दुना नभ इव त्वया समं कुलं अलं अभ्यलङ्कृतं (अभूत्) सुचरितविश्रुतं तव श्रुतं अर्थवत् (जातम्), सफलतया मे श्रमश्च सुखोदयः (जातः) इत्यन्वयः।

समुद्यता उन्नमता उदयतेति यावत् शारदेन्दुना शरत्कालिकचन्द्रेण नभः आकाशप्रदेश इव त्वया समं सकलं कुलं वंशः अलं पर्याप्तं यथा स्यात्तथा अभ्यलङ्कृतं अभिभूषितं समभूत्, सुचरितेन शीलवत्तया विश्रुतं प्रसिद्धं शीलविभूषणं तव श्रुतं शास्त्राध्ययनं अर्थवत् सार्थकं सफलमित्यर्थः सञ्जातमिति शेषः। शास्त्राभ्यासस्य विवेकफलत्वादिति भावः। सफलतया सार्थकतया मे मम श्रमश्च अध्यापनश्रमश्च सुखोदयः परिणामसुखः जात इति शेषः। उपमालङ्कारः। अतिरुचिरावृत्तम् ॥२१॥

तदेवमात्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्तीति ह्रीबलेनार्येण भवितव्यम्। एवं ह्रीपरिखासम्पन्न आर्यश्रावकोऽकुशलं प्रजहाति कुशलं च भावयतीत्येवमादिषु सूत्रेषूपनेयम्। ह्रीवर्णप्रतिसंयुक्तेषु लोकाधिपतेयेषु चेति।

इति ब्राह्मणजातकम्।

ह्रीबलेन लोकलज्जावता। ह्रीरेव परिखा तया सम्पन्नो युक्तः। आर्यश्रावकः धार्मिको जनः। भावयति लभते। सूत्रेषु बौद्धानामिति यावत्। ह्रीवर्णप्रतिसंयुक्तेषु लज्जाचारविस्तु लोकाधिपतेयेषु लोकगुरुषु बोधिसत्त्वादिष्वपि चैतत् ज्ञेयमिति ग्रन्थान्तरोद्धरणमेतत्।

इति ब्राह्मणजातकम्।

# अथ सुपारगजातकम्

धर्माश्रयं सत्यवचनमप्यापदं नुदति प्रागेव तत्फलमिति धर्मानुवर्तिना भवितव्यम् । तद्यथानुश्रूयते । बोधिसत्त्वभूतः किल महासत्त्वः परमनिपुणमतिर्नौसारथिर्बभूव । धर्मता ह्येषा बोधिसत्त्वानां प्रकृतिमेधावित्वाद्यदुत यं यं शास्त्रातिशयं जिज्ञासन्ते कलाविशेषं वा तस्मिंस्तस्मिन्नधिकतरा भवन्ति मेधाविनो जगतः । अथ स महात्मा विदितज्योतिर्गतित्वाद्दिग्विभागेष्वसंमूढमतिः परिविदितनियतागन्तुकौत्पातिकनिमित्तः कालाकालक्रमकुशलो मीनतोयवर्णभौमप्रकारशकुनिपर्वतादिभिश्चिह्नैः सूपलक्षितसमुद्रदेशः स्मृतिमान्विजिततन्द्रीनिद्रः शीतोष्णवर्षादिपरिखेदसहिष्णुरप्रमादी धृतिमानाहरणापहरणकुशलत्वादीप्सितं देशं प्रापयिता वणिजामासीत् । तस्य परमसिद्धयात्रत्वात्सुपारग इत्येव नाम बभूव । तदध्युषितं च पत्तनं सुपारगमित्येवाख्यातमासीत् । यदेतर्हि सूर्पारकमिति ज्ञायते । सोऽपि मङ्गलसम्मतत्वाद् वृद्धत्वेऽपि सांयात्रिकैर्यात्रासिद्धिकामैर्वहनमभ्यर्थनसत्कारपुरःसरमारोप्यते स्म । अथ कदाचिद्भरुकच्छादभिप्रयाताः सुवर्णभूमिवणिजो यात्रासिद्धिकामाः सुपारगं पत्तनमुपेत्य तं महासत्त्वं वहनारोहणार्थमभ्यर्थयामासुः ।

धर्माश्रयं धर्मसंरक्षणाय प्रयुज्यमानं सत्यवचनं सत्यवाक्यम् । तत्फलं सत्यवचनफलं तु प्रागेव पुरत एव भवति । नौसारथिर्नाविकः तरणिवाहकः । बोधिसत्त्वानां बोधिसत्त्वांशसम्भूतानां हि एषा धर्मता स्वभावः इति योज्यम् । शास्त्रातिशयं विशिष्टं शास्त्रम् । जगतः अधिकतरा जगदधिकाः । विदिता ज्योतिषां ग्रहाणां नक्षत्राणां च गतिः परिभ्रमणपद्धतिर्येन सः तस्य भावस्तस्मात् । दिग्विभागेषु दिङ्मुखवर्तिषु स्थानेषु । परिविदितानि सम्यक् ज्ञातानि नियतानि यथाकालभावीनि आगन्तुकानि भावीनि औत्पातिकानि उत्पातहेतुकानि च निमित्तानि चिह्नानि येन सः । मीनो मत्स्यः, तोयं जलं, तयोर्वर्णं आकृतिः, भौमप्रकारः पृथिव्या वर्णादिः, शकुनयः पक्षिणः, पर्वतादयश्च एभिः चिह्नैर्लिङ्गैः सूपलक्षितसमुद्रप्रदेशः नानाविधसमुद्रप्रदेशाऽभिज्ञः । विजिततन्द्रीनिद्रः आलस्यनिद्रादिरहितः । अप्रमादी सावधानः । आहरण—अपहरणे आगमनगमने तयोः कुशलत्वात् । परमसिद्धयात्रत्वात् यात्राकर्मणि अतिकुशलत्वात्

तेन अध्युषितं अधिष्ठितम्। एतर्हि इदानीम्। मङ्गलतया सम्मतस्तस्य भावस्तस्मात् वणिजां प्रभूतधनाहरणसहायकतया मङ्गलप्रद इति विश्रुतत्वात् इति भावः। सांयात्रिकैः पोतवणिग्भिः। 'सांयात्रिकः पोतवणिक्' इत्यमरः। वहनं नौकाचालनं आरोप्यते स्म प्रार्थ्यते स्म। भरुकच्छात् कच्छदेशसमुद्रतीरात्। सुवर्णभूमिः सुवर्णखानियुक्तो देशः तस्य वणिजः तत्र गन्तुकामा वणिज इत्यर्थः।

स तानुवाच—

जराज्ञया संह्रियमाणदर्शने श्रमाभिपातैः प्रतनूकृतस्मृतौ।
स्वदेहकृत्येऽप्यवसन्नविक्रमे सहायता का परिशङ्क्यते मयि ॥१॥

जराज्ञयेति। जराज्ञया संह्रियमाणदर्शने श्रमाऽभिपातैः प्रतनूकृतस्मृतौ स्वदेहकृत्येऽपि अवसन्नविक्रमे मयि का सहायता परिशङ्क्यते इत्यन्वयः।

जराज्ञया जरा वार्धक्यं 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः। तस्या आज्ञया शासनेन संह्रियमाणं विलुप्यमानं दर्शनं अवलोकनशक्तिर्यस्य तस्मिन्। श्रमाऽभिपातैः निरन्तरं श्रमपरम्पराभिः प्रतनूकृता मन्दीकृता स्मृतिधारणाशक्तिर्यस्य तस्मिन्। स्वदेहकृत्ये स्वशरीररक्षणकर्मण्यपि अवसन्नः नष्टप्रायः विक्रमः पराक्रमः सामर्थ्यं यस्य तस्मिन्। एवंविधे मयि का नाम सहायता सहायकत्वसामर्थ्यं परिशङ्क्यते, मत्तः कथं साहाय्यमपेक्ष्यते भवद्भिरिति शेषः ॥ १ ॥

वणिज ऊचुः—विदितेयमस्माकं युष्मच्छरीरावस्था। सत्यपि च वः पराक्रमासहत्वे नैवं वयं कर्मविनियोगेन युष्मानायासयितुमिच्छामः। किं तर्हि।

कर्मविनियोगेन कर्मणि नौकासञ्चालनादिरूपे परिश्रमे विनियोगेन नियुक्त्या।

त्वत्पादपङ्कजसमाश्रयसत्कृतेन
मङ्गल्यतामुपगता रजसा त्वियं नौः।
दुर्गे महत्यपि च तोयनिधावमुष्मि-
न्स्वस्ति व्रजेदिति भवन्तमुपागताः स्मः ॥ २ ॥

त्वत्पादेति। त्वत्पादपङ्कजसमाश्रयसत्कृतेन रजसा तु मङ्गल्यतामुपगता इयं (अस्माकं) नौः दुर्गे महत्यपि च अमुष्मिंस्तोयनिधौ स्वस्ति व्रजेत् इति (हेतोः) भवन्तमुपागताः स्मः इत्यन्वयः।

त्वत्पादपङ्कजयोर्भवच्चरणकमलयोः समाश्रयेण क्षमासङ्गेन यत् सत्कृतं पवित्रीभूतं तेन रजसा तु धूलिभरेण तावत् मङ्गलयतां मङ्गलप्रदतां उपगता प्राप्ता इयमस्माकं नौस्तरणिः, दुर्गे दुःखेन गन्तुं शक्ये दुरवगाहे महत्यपि च अतिविस्तृते च अमुष्मिंस्तोयनिधौ समुद्रे स्वस्ति व्रजेत् सकुशलं गच्छेत् इति हेतोः भवन्तं सुपारगं उपागताः स्मः शरणं प्राप्ताः स्मः ॥ २ ॥

अथ स महात्मा तेषामनुकम्पया जराशिथिलशरीरोऽपि तद्वहनमारुरोह । तदधिरोहणाच्च प्रमुदितमनसः सर्व एव ते वणिजो बभूवुर्नियतमस्माकमुत्तमा यात्रासिद्धिरिति । क्रमेण चावजगाहिरे विविधमीनकुलविचरितमनिभृतजलकलकलारावमनिलबलविलासप्रविचलिततरङ्गं बहुविधरत्नैर्भूमिविशेषैरर्पितरङ्गं फेनावलीकुसुमदामविचित्रमसुरवलभुजगभवनं दुरापपातालमप्रमेयतोयं महासमुद्रम् ।

वहनं यानपात्रं तरणिमित्यर्थः । विविधैः नानावर्णैः मीनकुलैः मत्स्यसमूहैः विचरित कृतभ्रमणम् । अनिभृतः अशान्तः जलकलकलारावः जलशब्दो यत्र तम् । बहुविधरत्नैः भूमिविशेषैः प्रदेशभेदैश्च अर्पितः दत्तः प्रकटीकृत इत्यर्थः रङ्गस्यकस्येव शोभा येन तम् । फेनावली समुद्रफेनपंक्तिरेव कुसुमदाम श्वेतकुसुममाला तया विचित्रं चारुवर्णम् ।

अथेन्द्रनीलप्रकराभिनीलं सूर्यांशुतापादिव खं विलीनम् ।
समन्ततोऽन्तर्हिततीरलेखमगाधमम्भोनिधिमध्यमीयुः ॥ ३ ॥

समन्ततोऽन्तर्हिततीरलेखमगाधमम्भोनिधिमध्यमीयुः ॥ ३ ॥ समन्ततोऽन्तर्हिततीरलेखमगाधमम्भोनिधिमध्यमीयुः विलीनं खमिव अथेति । अथ ( ते ) इन्द्रनीलप्रकराऽभिनीलं सूर्यांशुतापात् विलीनं खमिव समन्ततः अन्तर्हिततीरलेखं अगाधं अम्भोनिधिमध्यं ईयुः इत्यन्वयः ।

अथ ते सांयात्रिकाः इन्द्रनीलप्रकरः मरकतमणिपुञ्जं तद्वत् अभिनीलं सान्द्रनीलवर्णं सूर्यांशुतापात् प्रखरतरभास्करकिरणदाहात् विलीनं विगलितं द्रवीभूतं खं आकाशमिव, समन्ततः परितः चतुर्दिक्षु अन्तर्हिता लुप्ता तीरलेखा तीरभूमिचिह्नं यत्र तं, अगाधं गभीरतरं अम्भोनिधिमध्यं समुद्रमध्यदेशमीयुः अगच्छन् । उपमोत्प्रेक्षालङ्कारो ॥ ३ ॥

तेषां तत्रानुप्राप्तानां सायाह्नसमये मृदुभूतकिरणचक्रप्रभावे सवितरि महदौत्पातिकं परमभीषणं प्रादुरभूत् ।

महत् परमभीषणं अतिशयभयावहं औत्पातिकं उत्पातचिह्नानि ।

विभिद्यमानोर्मिविकीर्णफेनश्चण्डानिलास्फालनभीमनादः ।
नैभृत्यनिर्मुक्तसमग्रतोयः क्षणेन रौद्रः समभूत्समुद्रः ॥ ४ ॥

विभिद्यमानेति । क्षणेन विभिद्यमानोर्मिविकीर्णफेनः चण्डानिलास्फालन-भीमनादः नैभृत्यनिर्मुक्तसमग्रतोयः समुद्रः रौद्रः समभूत् इत्यन्वयः ।

क्षणेन मुहूर्तेनैव विभिद्यमानाः उच्छलन्त्यो या ऊर्मयस्तरङ्गाः तै विकीर्णः विक्षिप्तः फेनः फेनचयो येन सः, चण्डः प्रचण्डो योऽनिलः प्रभञ्जनः तेन यत् आस्फालनं वीचीनां ताडनं तज्जनितो भीमो भयात्रहो नादः ध्वनिर्यत्र सः । नैभृत्यं निश्चलत्वं तेन निर्मुक्तमुज्झितं समग्रमखिलं तोयं जलं यस्य सः अशान्तजलः समुद्रः [रौ]द्रः भीषणः समभूत् ॥ ४ ॥

उत्पातवाताकलितैर्महद्भिस्तोयस्थलैर्भीमरयैर्भ्रमद्भिः ।
युगान्तकालप्रचलाचलेव भूमिर्बभूवोग्रवपुः समुद्रः ॥ ५ ॥

उत्पातेति । उत्पातवाताकलितैः भीमरयैः भ्रमद्भिर्महद्भिः तोयस्थलैः युगान्त-कालप्रचलाऽचला भूमिरिव समुद्रः उग्रवपुर्बभूव इत्यन्वयः ।

उत्पाते क्षोभकाले यो वातो भीषणः पवमानः तेन आकलितैः सञ्चालितैः, भीमरयैः भीषणवेगैः भ्रमद्भिः परितो धावद्भिः महद्भिरत्युन्नतैः तोयस्थलैः जल-तरङ्गभित्तिभिः, युगान्तकाले कल्पावसानसमये प्रचलाचला कम्पमानपर्वता भूमिरिव वसुन्धरेव, समुद्रः सागरः उग्रवपुः प्रचण्डमूर्तिर्बभूव समजायत ॥ ५ ॥

विद्युल्लतोद्भासुरलोलजिह्वा नीला भुजङ्गा इव नैकशीर्षाः ।
आवव्रुरादित्यपथं पयोदाः प्रसक्तभीमस्तनितानुनादाः ॥ ६ ॥

विद्युदिति । विद्युल्लतोद्भासुरलोलजिह्वाः नैकशीर्षाः नीलाः भुजङ्गाः इव प्रसक्तभीमस्तनिताऽनुनादाः पयोदाः आदित्यपथं आवव्रुः इत्यन्वयः ।

विद्युल्लता सौदामिनी सैव उद्भासुरा ज्वलन्ती लोला चञ्चला जिह्वा रसना येषां ते नैकशीर्षाः अनेकमस्तकाः नीलाः नीलवर्णाः भुजङ्गाः सर्पा इव प्रसक्तो व्याप्तः भीमः स्तनितस्य गर्जितस्य अनुनादः प्रतिध्वनिर्येषां ते पयोदाः उत्पातजलधराः आदित्यपथं व्योममार्गं आवव्रुराच्छादयामासुः ॥ ६ ॥

घनैर्घनैरावृतरश्मिजालः सूर्यः क्रमेणास्तमुपारुरोह ।
दिनान्तलब्धप्रसरं समन्तात्तमो घनीभावमिवाऽऽजगाम ॥ ७ ॥

घनैरिति । घनैः घनैः आवृतरश्मिजालः सूर्यः क्रमेण अस्तं उपारुरोह, समन्तात् दिनान्तलब्धप्रसरं तमः घनीभावं आजगाम इवेत्यन्वयः ।

घनैः सान्द्रैः घनैर्मेघमण्डलैरावृतमाच्छन्नं रश्मिजालं किरणसमुदायः यस्य सः सूर्यः क्रमेण शनैः शनैरस्तमस्ताचलमुपारुरोह अधिजगाम । समन्तात् सर्वतश्च दिनान्ते प्रदोषे लब्धप्रसरं प्रसारशीलं तमस्तिमिरं घनीभावं सान्द्रतां गाढत्वं अथवा घनस्य मेघस्य भावः स्वरूपं तं आजगाम इव प्राप इव । उत्प्रेक्षालङ्कारः ॥ ७ ॥

धाराशरैराच्छुरितोर्मिचक्रे महोदधावुत्पततीव रोषात् ।
भीतेव नौरभ्यधिकं चकम्पे विषादयन्ती हृदयानि तेषाम् ॥ ८ ॥

धाराशरैरिति । धाराशरैः आच्छुरितोर्मिचक्रे महोदधौ रोषादिव उत्पतति, तेषां हृदयानि विषादयन्ती नौः भीतेव अभ्यधिकं चकम्पे इत्यन्वयः ।

धाराः जलधारा एव शराः बाणास्तैराच्छुरितमभिन्यासं ऊर्मिचक्रं तरङ्गनिचयः करस्थानीयः यस्य तस्मिन् महोदधौ महासमुद्रे रोषात् क्रोधावेगादिव उत्पतति सम्मुखमापतति सति, तेषां सांयात्रिकाणां हृदयानि चेतांसि विषादयन्ती विषादमलिनानि कुर्वाणा नौः तरिः भीतेव भयग्रस्तेव अभ्यधिकमतिशयेन चकम्पे कम्पते स्म । अत्र समुद्रतरण्योर्युद्धवृत्तान्तप्रतीत्या समासोक्तिरलङ्कारः ॥ ८ ॥

ते त्रासदीनाश्च विषादमूका धीराः प्रतीकारससम्भ्रमाश्च ।
स्वदेवतायाचनतत्पराश्च भावान्यथासत्त्वगुणं विवव्रुः ॥ ९ ॥

त इति । धीरास्ते त्रासदीनाश्च विषादमूकाः प्रतीकारससम्भ्रमाश्च स्वदेवतायाचनतत्पराश्च ( सन्तः ) यथासत्त्वगुणं भावान् विवव्रुः इत्यन्वयः ।

धीराः स्वभावतो धैर्यशालिनोऽपि ते वणिजः त्रासेन भयेन दीनाः दैन्ययुताश्च अत एव विषादमूकाः दुःखेन तूष्णींभावभाजः । प्रतीकारे प्रस्तुताऽपन्निवारणे ससंभ्रमाः सोद्वेगाश्च, स्वदेवतानां स्वाराध्यदेवताविशेषाणां याचने प्रार्थनायां तत्पराश्च सन्तः यथासत्त्वगुणं सत्त्वगुणानुकूलं न्यूनाधिकभावेन भावान् हृद्गतमभिप्रायं विवव्रुः प्रादर्शयन् ॥ ९ ॥

अथ ते सांयात्रिकाः प्रबलबलचलितसलिलवेगवशगया नावा परि-

भ्रम्यमाणा बहुभिरप्यहोभिर्नैव कुतश्चित्तीरं ददृशुर्न च यथेप्सितानि समुद्रचिह्नानि। अपूर्वैरेव तु समुद्रचिह्नैरभिवर्धमानवैमनस्या भयविषादव्याकुलतामुपजग्मुः। अथैतान्सुपारगो बोधिसत्त्वो व्यवस्थापयन्नुवाच—अनाश्चर्यं खलु महासमुद्रमध्यमवगाढानामौत्पातिकक्षोभपरिक्लेशः। तदलमत्र भवतां विषादानुवृत्त्या। कुतः।

यथेप्सितानि तीरसामीप्यसूचकानि। अपूर्वैः विचित्रैः। वैमनस्यं दुःखम्। व्यवस्थापयन् सान्त्वयन्। अनाश्चर्यं नाद्भुतविषयः। अवगाढानां प्रविष्टानाम्।

नापत्प्रतीकारविधिर्विषादस्तस्मादलं दैन्यपरिग्रहेण।
धैर्यात्तु कार्यप्रतिपत्तिदक्षाः कृच्छ्राण्यकृच्छ्रेण समुत्तरन्ति ॥१०॥

नापदिति। विषादः आपत्प्रतीकारविधिः न तस्मात् दैन्यपरिग्रहेण अलं, धैर्यात्तु कार्यप्रतिपत्तिदक्षाः (जनाः) अकृच्छ्रेण कृच्छ्राणि समुत्तरन्ति इत्यन्वयः।

विषादः अधैर्यं आपदां सङ्कटानां प्रतीकारविधिर्निवारणोपायः नाऽस्ति खलु तस्मात् हेतोर्दैन्यपरिग्रहेण दैन्यव्याकुलतया अलं न प्रयोजनम्। धैर्यात्तु चेतसः स्थिरतया तु कार्यप्रतिपत्तौ प्रस्तुतकार्यनिर्वाहे दक्षाः कुशलाः जनाः अकृच्छ्रेण अनायासेन कृच्छ्राणि महापदः समुत्तरन्ति समुल्लङ्घयन्ति ॥१०॥

विषाददैन्यं व्यवधूय तस्मात्कार्यावकाशं क्रियया भजध्वम्।
प्राज्ञस्य धैर्यज्वलितं हि तेजः सर्वार्थसिद्धिग्रहणाग्रहस्तः ॥११॥

विषाददैन्यमिति। तस्मात् विषाददैन्यं व्यवधूय क्रियया कार्यविकाशं भजध्वं, हि प्राज्ञस्य धैर्यज्वलितं तेजः सर्वार्थसिद्धिग्रहणाग्रहस्तः (भवति) इत्यन्वयः।

तस्मात् धैर्यधारणौचित्यात् विषादहेतुकं दैन्यं शिथिलतां व्यवधूय तिरस्कृत्य क्रियया समुचिताचरणेन कार्यावकाशं कार्यावसरं भजध्वं सफलीकुरुत। हि यतः प्राज्ञस्य बुद्धिमतो जनस्य धैर्यज्वलित धैर्यसंधुक्षितं तेजः प्रभावः सर्वार्थसिद्धिग्रहणे सकलप्रयोजनसम्पादने अग्रहस्तः पुरःसरं भवतीति शेषः ॥११॥

तद्यथाधिकारावहिता भवन्तु भवन्तः। इति ते सांयात्रिकास्तेन महात्मना धीरीकृतमनसः कूलदर्शनोत्सुकमतयः समुद्रमवलोकयन्तो ददृशुः पुरुषविग्रहानामुक्तरूप्यकवचानिवोन्मज्जतो निमज्जतश्च। सम्यक् वैषा-

माकृतिनिमित्तमुपधार्य सविस्मयाः सुपारगाय न्यवेदयन्त । अपूर्वं खल्विदमिह महासमुद्रे चिह्नमुपलभ्यते । एते खलु

यथाविकारं यथामति अवहिताः सावधानाः । पुरुषविग्रहान् नराऽऽकारान् आमुक्तानि विधृतानि रूप्यकवचानि रजतकवचानि यैस्तानिव । उपधार्य विलोक्य ।

आमुक्तरूप्यकवचा इव दैत्ययोधा
घोरेक्षणाः खुरनिकाशविरूपघोणाः ।
उन्मज्जनावतरणस्फुरणप्रसङ्गा-
त्क्रीडामिवार्णवजलेऽनुभवन्ति केऽपि ॥१२॥

आमुक्तेति । (एते) केऽपि आमुक्तरूप्यकवचाः दैत्ययोधा इव घोरेक्षणाः खुरनिकाशविरूपघोणाः उन्मज्जनाऽवतरणस्फुरणप्रसङ्गात् अर्णवजले क्रीडामिव अनुभवन्ति इत्यन्वयः ।

एते केऽपि पुरुषाकाराः पुरोवर्तिनो जीवाः आमुक्तरूप्यकवचाः विधृतराजतकवचाः दैत्ययोधाः दैत्यभटा इव घोरेक्षणाः भीमनयनाः खुरनिकाशाः पशूनां पादशफतुल्याः चिपिटा इति यावत् विरूपाः विकृतरूपाः घोणाः नासिकाः येषां ते उन्मज्जनं, अवतरणं निमज्जनं, स्फुरणं वेल्लितं, एतेषां प्रसङ्गात् व्यापारात् अर्णवजले समुद्रतोये क्रीडां खेलनव्यापारमिव अनुभवन्ति विदधति ॥१२॥

सुपारग उवाच—नैते मानुषा अमानुषा वा मीना खल्वेते: । यतो न भेतव्यमेभ्य: किन्तु—

सुदूरमपकृष्टाः स्मः पत्तनद्वितयादपि ।
खुरमाली समुद्रोऽयं तद्यतध्वं निवर्तितुम् ॥१३॥

सुदूरमिति । (वयं) पत्तनद्वितयादपि सुदूरमपकृष्टाः स्मः, अयं (च) खुरमाली समुद्रः तत् निवर्तितुं यतध्वमित्यन्वयः ।

वयं तावत् पत्तनद्वितयात् समुद्रान्तर्वर्तिद्वीपविशेषतीरवर्तिनः आश्रयभूतात् पत्तनद्वितयात् नगरद्वयादपि सुदूरं विप्रकृष्टप्रदेशं अपकृष्टाः स्मः समुद्रेण नीताः स्मः । अयं च खुरमाली नाम भीषणः समुद्रः (वर्तते) तत् तस्मात् इतः निवर्तितुं प्रतिगन्तु यतध्वं प्रयत्नं कुरुत ॥१३॥

चण्डवेगवाहिना सलिलनिवहेनैकान्तहरेण च पाश्चात्येन वायुना समाक्षिप्तया नावा न ते सांयात्रिकाः शेकुर्विनिवर्तितुम् । अथावगाह-

जाताः क्रमेण रूप्यप्रभावभासितमनाः फेननिचयपाण्डुरमपरं समुद्रमालोक्य सविस्मयाः सुपारगमूचुः—

चण्डवेगवाहिना अतितरस्विना। रूप्यप्रभया रजतकान्त्याऽवभासितम्।

स्वफेनभग्नैरिव कोऽयमम्बुभिर्महार्णवः शुक्लदुकूलवानिव।
द्रवानिवेन्दोः किरणान्समुद्वहन्समन्ततो हास इव प्रसर्पति ॥१४॥

स्वफेनभग्नैरिति। स्वफेनभग्नैरिव अम्बुभिः शुक्लदुकूलवान् इव कोऽयं महार्णवः इन्दोः किरणानिव द्रवान् समुद्वहन् समन्ततः हास इव प्रसर्पति ? इत्यन्वयः।

स्वफेनभग्नैः स्वडिण्डीरपिहितैरिव अम्बुभिः जलैः शुक्लदुकूलवानिव धवलोत्तरीयवानिव कोऽयं महार्णवः किंनामाऽयं महासमुद्रः ? इन्दोः किरणान् चन्द्रमसः करानिव द्रवान् जलस्रोतांसि समुद्वहन् धारयन् समन्ततः सर्वतः हासः अट्टहास इव प्रसर्पति समुल्लसति ॥१४॥

सुपारग उवाच—कष्टम्। अतिदूरं खल्ववगाह्यते।
अवगाह्यते प्रविश्यते।

क्षीरार्णव इति ख्यात उदधिर्दधिमाल्यसौ।
क्षमं नातः परं गन्तुं शक्यते चेन्निवर्तितुम् ॥१५॥

क्षीरार्णव इति। क्षीरार्णव इति ख्यातः असौ दधिमाली उदधिः (अस्ति) निवर्तितुं शक्यते चेत् अतः परं गन्तुं न क्षमम् इत्यन्वयः।

क्षीरार्णवः दुग्धसमुद्र इति ख्यातः प्रसिद्धिं गतः दधिमालीनामकोऽयं उदधिः समुद्रोऽस्तीति शेषः निवर्तितुं इतः परावर्तितुं शक्यते चेत् (भवद्भिः) अतः परं इतोऽप्यग्रे गन्तुं न क्षममयोग्यम् ॥१५॥

वणिज ऊचुः—न खलु शक्यते विलम्बयितुमपि वहनं कुत एव सन्निवर्तयितुमतिशीघ्रवाहित्वाद्वहनस्य प्रतिकूलत्वाच्च मारुतस्येति। अथ व्यतीत्य तमपि समुद्रं सुवर्णप्रभानुरञ्जितप्रचलोर्मिमालमग्निज्वालकपिलसलिलमपरं समुद्रमालोक्य विस्मयकौतूहलास्ते वणिजः सुपारगं पप्रच्छुः।

विलम्बयितुं अवरोद्धुम्। वहनं तरणिः। सुवर्णस्य कनकस्येव या प्रभा तया अनुरञ्जिता प्रचला ऊर्मिमाला तरङ्गपरम्परा यस्य तम्। अग्निज्वालवत् वह्निशिखावत् कपिलं पिङ्गलवर्णं सलिलं जलं यस्य तम्। 'वह्निरिवाग्निज्वालकपिलं' इत्यपरः।

बालार्कलक्ष्म्येव कृताङ्गरागैः समुन्नमद्भिः सलिलैरनीलैः ।
ज्वलन्महानग्निरिवावभाति को नाम तस्माच्च महार्णवोऽयम् ॥१६॥

बालार्कलक्ष्म्येति । बालार्कलक्ष्म्या कृताङ्गरागैरिव समुन्नमद्भिः अनीलैः सलिलैः ज्वलन् महान् अग्निरिवाऽवभाति, तस्माच्च अयं को नाम महार्णवः (अस्ति)? इत्यन्वयः ।

बालार्कलक्ष्म्या बालसूर्यशोभया बालतपेनेत्यर्थः कृताङ्गरागैः विहितानुलेपनैरिव समुन्नमद्भिः समुच्छलद्भिः अनीलैः नीलेतरवर्णैः उज्ज्वलैरित्यर्थः सलिलैर्जलैः ज्वलन् भासमानः महान् अग्निरिव अतिविस्तृतो वह्निरिव अवभाति पुरतो दृश्यते, तस्माच्च हेतोः अयं को नाम महार्णवः किंनामको महासमुद्रः अस्ति? इति प्रश्नः । उत्प्रेक्षालङ्कारः ॥१६॥

सुपारग उवाच—

अग्निमालीति विख्यातः समुद्रोऽयं प्रकाशते ।
अतीव खलु साधु स्यान्निवर्तमहि यद्यतः ॥१७॥

अग्निमालीति । अग्निमालीति विख्यातः अयं समुद्रः प्रकाशते यदि अतः निवर्तेमहि (तर्हि) अतीव साधु स्यात् खलु इत्यन्वयः ।

अग्निमालीति नाम्ना विख्यातो विश्रुतः अयं समुद्रः प्रकाशते दृश्यते, यदि अतः अस्मात् निवर्तेमहि परावृत्ता भविष्यामः तर्हि अतीव साधु कल्याणं स्यात् खल्विति निश्चये ॥१७॥

इति स महात्मा नाममात्रमकथयत्तस्य सरित्पतेर्न तोयवैवर्ण्यकारणं दीर्घदर्शित्वात् । अथ ते सांयात्रिकास्तमपि समुद्रमतीत्य पुष्परागेन्द्रनीलप्रभोद्योतितसलिलं परिपक्वकुशवननिकाशवर्णं समुद्रमालोक्य कौतूहलजाताः सुपारगं पप्रच्छुः—

तोयवैवर्ण्यकारणमग्निसान्निध्यादि । पुष्परागः पीतमणिः, इन्द्रनीलः मरकतमणिः, तयोरिव या प्रभा कान्तिः तया उद्योतितं सलिलं यस्य तम् । परिपक्वं परिपाकपिङ्गलाकारं यत् कुशवनं दर्भकाननं तन्निकाशः तत्सदृशः वर्णः यस्य तम् ।

परिणतकुशपर्णवर्णतोयः सलिलनिधिः कतमो न्वयं विभाति ।
सकुसुम इव फेनभक्तिचित्रैरनिलजवाकलितैस्तरङ्गभङ्गैः ॥१८॥

परिणतेति। परिणतकुशपर्णवर्णतोयः फेनभक्तिचित्रैः अनिलजवाकलितैस्त-रङ्गभङ्गैः सकुसुम इव कतमो नु अयं सलिलनिधिः विभाति इत्यन्वयः।

परिणतानि परिपक्वानि यानि कुशपर्णानि दर्भदलानि तेषां वर्ण इव वर्ण आकृतिर्यस्य तथाविधं तोयं जलं यस्य सः, फेनानां डिण्डिराणां 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। भक्तिभिः भङ्गिभिः रचनाविशेषैरिति यावत् चित्रैर्विचित्रा-कृतिभिः अनिलजवाकलितैर्वर्तितैः तरङ्गभङ्गैः कल्लोलसमूहैः सकुसुम इव विधृत-विविधमाल्य इव कतमो नु अयं कः खल्वेष सलिलनिधिः समुद्रः विभाति दृश्यते॥

सुपारग उवाच—भोः सार्थवाहा निवर्तनं प्रति यत्नः क्रियताम्। न खल्वतः क्षमते परं गन्तुम्।

सार्थवाहाः वणिजः। क्षमते समर्थो भवति साधारगजन इति यावत्।

कुशमाली समुद्रोऽयमत्यङ्कुश इव द्विपः।
प्रसह्यासह्यसलिलो हरन् हरति नो रतिम्॥१९॥

कुशमालीति। अयं अत्यङ्कुशः द्विप इव कुशमाली समुद्रः (अस्ति) असह्यसलिलः (यः) प्रसह्य हरन् नो रतिं हरति इत्यन्वयः।

अयं पुरोऽवलोक्यमानः अङ्कुशमतिक्रान्तः अत्यङ्कुशः मदोन्मत्तः द्विप इव वारणेन्द्र इव कुशमालीति नाम्ना विदितः समुद्रः अस्ति। असह्य सोढुमशक्यं सलिलं जलवेगः यस्य तादृक् (यः) जलधिः प्रसह्य बलादेव हरन् दूरं नयन् नोऽस्माकं रतिं कुशलाऽऽशां हरति शिथिलीकरोति॥१९॥

अथ ते वाणिजकाः परेणापि यत्नेन निवर्तयितुमशक्नुवन्तस्तमपि समुद्रमतीत्य वंशरागवैडूर्यप्रभाव्यतिकरहरितसलिलमपरं समुद्रमालोक्य सुपारगमपृच्छन्।

निवर्तयितुं प्रवहणमिति शेषः। वंशरागः वंशदण्डकान्तिः।

मरकतहरितप्रभैर्जलैर्वहति नवामिव शाद्वलश्रियम्।
कुमुदरुचिरफेनभूषणः सलिलनिधिः कतमोऽयमीक्ष्यते॥२०॥

मरकतहरितप्रभैरिति। कुमुदरुचिरफेनभूषणः (अयं सलिलनिधिः) मरकतहरितप्रभैर्जलैः नवां शाद्वलश्रियमिव वहति अयं कतमः सलिलनिधिः ईक्ष्यते इत्यन्वयः।

कुमुदरुचिराः श्वेतकमलशोभनाः फेना एव भूषणं यस्य सः एष सलिलनिधिः मरकतहरितप्रभैः इन्द्रनीलमणिहरिद्वर्णैः जलैः नवां प्रत्यग्रां शाद्वलश्रियं तृणमयभूमिशोभामिव वहति धारयति ततश्च अयं कतमः किमभिधानः सलिलनिधिः ईक्ष्यते अवलोक्यते अस्माभिरिति प्रश्नः । अपरवक्त्रं वृत्तम् ॥२०॥

अथ स महात्मा तेन वणिग्जनस्य व्यसनोपनिपातेन दह्यमानहृदयो दीर्घमुष्णमभिनिश्वस्य शनैरुवाच—

व्यसनोपनिपातेन आपत्तिकष्टेन ।

अतिदूरमुपेताः स्थ दुःखमस्मान्निवर्तितुम् ।
पर्यन्त इव लोकस्य नलमाल्येष सागरः ॥२१॥

अतिदूरमिति । ( यूयं ) अतिदूरं उपेताः स्थ अस्मान्निवर्तितु दुःखम् । लोकस्य पर्यन्त इव एष नलमाली सागरः ( अस्ति ) इत्यन्वयः ।

यूयं अतिदूरं पृथ्वीतलादतिविप्रकृष्टं उपेताः प्राप्ताः स्थ, अस्मात् स्थानान्निवर्तितु दुःख, निवर्तनं कठिनमिति यावत्, लोकस्य भुवनस्य पर्यन्त इव प्रान्तभाग इव अन्तिमसीमेव एष नलमालीनामकः सागरः अस्ति ॥२१॥

अथ ते वाणिजका विषादोपरुध्यमानमनसो विस्रस्यमानगात्रोत्साहा निश्वसितमात्रपरायणास्तत्रैव निषेदुः । व्यतीत्य च तमपि समुद्रं सायाह्नसमये विलम्बमानरश्मिमण्डले सलिलनिधिमिव प्रवेष्टुकामे दिवसकरे समुद्वर्तनस्येव सलिलनिधेरशनीनामिव च सम्पततां वेणुवनानामिव चाग्निपरिगतानां विस्फुटतां तुमुलमतिभीषणं श्रुतिहृदयविदारणं समुद्रध्वनिमश्रौषुः । श्रुत्वा च सन्त्रासवशगाः स्फुरन्मनसः सहसैवोत्थाय समन्ततोऽनुविलोकयन्तो ददृशुः प्रपात इव श्वभ्र इव च महति समुद्रौघं निपतन्तं दृष्ट्वा च परमभयविषादविह्वलाः सुपारगमुपेत्योचुः ।

विषादेन दुःखेन उपरुध्यमानं आच्छाद्यमानं मनो येषां ते । विस्रस्यमानानि शिथिलीभूतानि गात्राणि वपूंषि उत्साहाश्च येषां ते । निषेदुः उपविष्टाः । समुद्वर्तमानस्य विलुठत इव । अशनीनां वज्राणाम् । वेणुवनानां वंशकाण्डानामिव च अग्निपरिगतानां दहनमध्यगतानाम् । तुमुलं सान्द्रम् । श्रुतिहृदयविदारणं कर्णकुहरभेदिनम् । स्फुरन्मनसः चञ्चलाः । प्रपात इव पर्वतादिभ्रष्टप्रदेश इव श्वभ्रे गर्ते ।

निर्भिन्दन्निव नः श्रुतीः प्रतिभयश्चेतांसि मथ्नन्निव
क्रुद्धस्येव सरित्पतेर्ध्वनिरयं दूरादपि श्रूयते।
भीमे श्वभ्र इवार्णवस्य निपतत्येतत्समग्रं जलं
तत्कोऽसावुदधिः किमत्र च परं कृत्यं भवान्मन्यते॥२२॥

निर्भिन्दन्निति। प्रतिभयो नः श्रुती निर्भिन्दन्निव चेतांसि मथ्नन्निव क्रुद्धस्येव सरित्पतेरयं ध्वनिर्दूरादपि श्रूयते, भीमे श्वभ्र इव अर्णवस्य एतत् समग्रं जलं निपतति, तत् असौ उदधिः कः? अत्र च भवान् किं परं कृत्यं मन्यते? इत्यन्वयः।

प्रतिभयो भयावहः नोऽस्माकं श्रुतीः कर्णकुहराणि निर्भिन्दन् दलयन्निव, चेतांसि मनांसि मथ्नन् चूर्णयन्निव, क्रुद्धस्येव रोषणस्येव सरित्पतेः समुद्रस्य अयं महान् ध्वनिः शब्दः दूरादपि अधुना दूरस्थोऽपि विस्पष्टं श्रूयते समाकर्ण्यते, किं च भीमे विकराले श्वभ्रे महागर्ते इव अर्णवस्य समुद्रस्य एतत् समग्रमखिलं जलं निपतति गच्छति, तत् तस्मात् असौ पुरोवर्ती उदधिः कः? अत्र च भवान् प्रस्तुतं किं परं कृत्यं मन्यते, किं कर्तव्यं भवताऽऽज्ञाप्यते इति प्रश्नः॥२२॥

अथ स महात्मा ससम्भ्रमः कष्टं कष्टमित्युक्त्वा समुद्रमालोकयन्नुवाच—

ससंभ्रमः सोद्वेगः।

यत्प्राप्य न निवर्तन्ते मृत्योर्मुखमिवामुखम्।
अशिवं समुपेताः स्थ तदेतद्वडवामुखम्॥२३॥

यत्प्राप्येति। मृत्योर्मुखमिव आमुखं यत्प्राप्य न निवर्तन्ते तदेतत् अशिवं वडवामुखं समुपेताः स्थ इत्यन्वयः।

मृत्योर्मुखमिव अन्तकाननमिव आमुखं सम्मुखं यत्प्राप्य यदधिगम्य (जनाः) न निवर्तन्ते न कुशलिनः परावर्तन्ते, तदेतत् अशिवं अमङ्गलं वडवामुखं वडवानलद्वारं समुपेताः स्थ प्राप्ताः स्थ॥२३॥

तदुपश्रुत्य ते वाणिजका वडवामुखमुपेता वयमिति त्यक्तजीविताशा मरणभयविक्लवीभूतमनसः।

मरणभयेन विक्लवीभूतमतिशयेनाऽऽकुलीभूतं मनो येषां ते।

सास्वरं रुरुदुः केचिद्विलेपुरश्च चुक्रुशुः।
न किञ्चित्प्रत्यपद्यन्त केचित्त्रासविचेतसः॥२४॥

सस्वरमिति । अथ केचित् सस्वरं रुरुदुः, विलेपुः, चुक्रुशुः च, केचित् (तु) त्रासविचेतसः किञ्चिदपि न प्रत्यपद्यन्त इत्यन्वयः ।

अथ केचित् वणिजः सस्वरं तारस्वरेण रुरुदुः अरोदिषुः, विलेपुः विलापं चक्रुः, चुक्रुशुः आक्रोशं व्यदधुः । केचिदपरे तु त्रासेन भयेन विचेतसः विमनस्काः शून्यचेतसः ( सन्त ) किञ्चिदपि कार्यं न प्रत्यपद्यन्त स्तब्धा इव तस्थुरिति यावत् ॥२४॥

विशेषतः केचिदभिप्रणेमुर्देवेन्द्रमार्तिप्रहतैर्मनोभिः ।
आदित्यरुद्रांश्च मरुद्वसूंश्च प्रपेदिरे सागरमेव चान्ये ॥२५॥

विशेषत इति । विशेषतः केचित् आर्तिप्रहतैर्मनोभिर्देवेन्द्रमभिप्रणेमुः, अन्ये ( पुनः ) आदित्यरुद्रांश्च मरुद्वसूंश्च सागरमेव च प्रपेदिरे इत्यन्वयः ।

विशेषतः केचित् कतिपये सार्थवाहाः आर्तिप्रहतैर्दुर्दशाव्याकुलैर्मनोभिः ( संयुताः ) देवेन्द्रं सुरराजमिन्द्रं अभिप्रणेमुः नमश्चक्रुः, अन्ये अपरे पुनः आदित्यान् द्वादशसंख्याकान् रुद्रानेकादश तांश्च मरुतो वायून् देवताविशेषान् एकोनपञ्चाशतसंख्याकान् वा वसवोऽष्टौ तांश्च सागरं जलाधीशं समुद्रमेव च प्रपेदिरे स्तोतुमारेभिरे ॥ २५ ॥

जेपुश्च मन्त्रानपरे विचित्रानन्ये तु देवीं विधिवत्प्रणेमुः ।
सुपारगं केचिदुपेत्य तत्तद्विचेष्टमानाः करुणं विलेपुः ॥२६॥

जेपुरिति । अपरे च विचित्रान् मन्त्रान् जेपुः, अन्ये तु विधिवत् देवीं प्रणेमुः, केचित् तत्तद्विचेष्टमानाः सुपारगमुपेत्य करुणं विलेपुः इत्यन्वयः ।

अपरे च केचित् विचित्रान् बीजादिमयान् मन्त्रान् देवतामन्त्रान् जेपु सस्मरुः, अन्ये तु विधिवत् यथाविधि मुद्रादिविधिभिः देवीं भगवतीं दुर्गां प्रणेमुः नमश्चक्रुः, केचित्तु तत्तत् तथा तथा करचरणैः विचेष्टमानाः सुपारगमुपेत्य तत्सन्निधे करुणं यथा स्यात्तथा विलेपुः विलापमारेभिरे ॥२६॥

आपद्गतत्रासहरस्य नित्यं परानुकम्पागुणसम्भृतस्य ।
अयं प्रभावातिशयस्य तस्य तवाभ्युपेतो विनियोगकालः ॥२७॥

तमेवाह आपद्गतेति । आपद्गतत्रासहरस्य नित्य परानुकम्पागुणसम्भृतस्य तस्य तव प्रभावातिशयस्य विनियोगकालः अभ्युपेतः ( अस्ति ) इत्यन्वयः ।

आपद्गतानां व्यसनपतितानां त्रासहरस्य भीतिनिवारकस्य निश्चय सततं परानुकम्पा परानुग्रह एव गुणः तेन सम्भृतस्य समन्वितस्य तस्य विश्वविश्रुतकीर्तेस्तव प्रभावातिशयस्य माहात्म्यातिशयस्य अयं एष एव विनियोगकालः उपयोगावसरः अभ्युपेतः उपस्थितः अस्तीति शेषः ॥२७॥

आर्ताननाथाञ्छरणागतांस्त्वं त्रातुमावर्जय धीरचेतः ।
अयं हि कोपाद्वडवामुखेन चिकीर्षति ग्रासमिवार्णवोऽस्मान् ॥२८॥

आर्तानिति । हे धीर ! त्वं आर्तान् अनाथान् शरणागतान् नः त्रातुं चेतः आवर्जय, हि अयं अर्णवः कोपाद् वडवामुखेन अस्मान् ग्रासमिव चिकीर्षतीत्यन्वयः ।

हे धीर ! धैर्यवतामग्रेसर ! त्वं आर्तान् दुःखरूढान् अनाथान् अशरणान् शरणागतान् त्वदेकाश्रयान् नोऽस्मान् त्रातु अस्या विपदो रक्षितुं चेतः आवर्जय दयार्द्रं विधेहि । हि यतः अयं अर्णवः सागरः कोपात् क्रोधादिव वडवामुखेन वडवानलवदनेन अस्मान् ग्रासमिव चिकीर्षति कवलीकर्तुं वाञ्छति ॥२८॥

नोपेक्षितुं युक्तमयं जनस्ते विपद्यमानः सलिलौघमध्ये ।
नाज्ञां तवात्येति महासमुद्रस्तद्वार्यतामप्रशमोऽयमस्य ॥२९॥

नोपेक्षितुमिति । सलिलौघमध्ये विपद्यमानः अयं जनः ते उपेक्षितु न युक्तं, (हि) महासमुद्रः तवाऽऽज्ञां नात्येति, तत् अस्याऽयं अप्रशमः वार्यताम् इत्यन्वयः

सलिलौघमध्ये जलराशिमध्ये विपद्यमानः सङ्कटग्रस्तः अयं जनः सार्थवाहसमूहः ते उपेक्षितुं न युक्तं न योग्य इत्यर्थः । हि यतः महासमुद्रः वारांनिधिः तवाऽऽज्ञां त्वदीयमनुशासनं न अत्येति नाऽतिक्रामति, तत् ततः अस्य जलधेरयं अप्रशमः दर्पः वार्यतां दूरीक्रियताम् ॥२९॥

अथ स महात्मा महत्या करुणया समापीड्यमानहृदयस्तान्वाणिजकान्व्यवस्थापयन्नुवाच । अस्त्यत्रापि नः कश्चित्प्रतीकारविधिः प्रतिभाति । तत्तावत्प्रयोक्ष्ये । यतो मुहूर्तं धीरास्तावद्भवन्तु भवन्त इति । अथ ते वाणिजका अस्त्यत्रापि किल प्रतीकारविधिरित्याशया समुपस्तम्भितधैर्यास्तदवहितमनसस्तूष्णीं बभूवुः । अथ सुपारगो बोधिसत्त्व एकांसमुत्तरासङ्गं कृत्वा दक्षिणेन जानुमण्डलेनाधिष्ठाय नावं समावर्जितसर्वभावः

प्रणम्य तथागतेभ्यस्तान्सांयात्रिकानामन्त्रयते स्म। शृण्वन्त्वत्र भवन्तः सांयात्रिकाः सलिलनिधिव्योमाश्रयाश्च देवविशेषाः।

करुणया अनुकम्पया, व्यवस्थापयन् आश्वासयन्। प्रयोक्ष्ये करिष्ये। तस्मिन् प्रतीकारविधौ अवहितं सावधानं मनो येषां ते। उत्तरासङ्गमुत्तरीयं एकांसं एकांसास्थितं कृत्वेत्यन्वयः। अधिष्ठाय उपविश्य। समावर्जितसर्वभावः स्थिरचित्तः। तथागतेभ्यः बुद्धेभ्यः।

स्मरामि यत आत्मानं यतः प्राप्तोऽस्मि विज्ञताम्।
नाभिजानामि सञ्चिन्त्य प्राणिनं हिंसितुं क्वचित् ॥३०॥
अनेन सत्यवाक्येन मम पुण्यबलेन च।
वडवामुखमप्राप्य स्वस्ति नौर्विनिवर्तताम् ॥३१॥

स्मरामीति। अनेनेति। यतः आत्मानं स्मरामि, यतः (च) विज्ञतां प्राप्तोऽस्मि, सञ्चिन्त्य (अपि) प्राणिनं हिंसितुं क्वचित् नाऽभिजानामि, मम अनेन सत्यवाक्येन पुण्यबलेन च वडवामुखं अप्राप्य नौः स्वस्ति विनिवर्तताम् इत्यन्वयः।

यतः यस्मात् आत्मानं आत्मनः वास्तविकं रूपं स्मरामि साक्षात्करोमि यतश्च विज्ञतां सम्यक् सम्बोधिलाभं प्राप्तोऽस्मि अधिगतवानस्मि सञ्चिन्त्याऽपि सम्यग्विचिन्त्याऽपि प्राणिनं हिंसितुं प्राणिहननं कर्तुं नाऽभिजानामि, प्राणहिंसा क्वचिदपि कृता न स्मर्यते इत्यर्थः। मम अनेन सत्यवाक्येन सत्योदीरणेन पुण्यबलेन सुकृतबलेन च वडवामुखं वडवानलविवरं अप्राप्य अप्रविश्य नौस्तरणिः स्वस्ति विनिवर्ततां सकुशलं परावर्तताम् ॥३०-३१॥

अथ तस्य महात्मनः सत्याधिष्ठानबलात्पुण्यतेजसा सह सलिलजवेन स मारुतो व्यावर्तमानस्तां नावं निवर्तयामास। निवृत्तां तु तां नावमभिसमीक्ष्य ते वाणिजकाः परमविस्मयप्रहर्षोद्धतमानसा निवृत्ता नौरिति प्रणामसभाजनपुरःसरं सुपारगाय न्यवेदयन्त। अथ स महात्मा तान्वाणिजकानुवाच—स्थिरीभवन्तु भवन्तः शीघ्रमारोप्यन्तां शीतानि। इति च तेन समादिष्टाः प्रमोदादुद्भूतबलोत्साहास्ते तद्धिकृतास्तथा चक्रुः—

व्यावर्तमानः पराङ्मुखः। शीतानि महापटाः।

अथ मुदितजनप्रहासनादा प्रविततपाण्डुरशीतचारुपक्षा।
सलिलनिधिगता रराज सा नौर्गतजलदे नभसीव राजहंसी ॥३२॥

अथेति। अथ मुदितजनप्रहासनादा प्रविततपाण्डुरशीतचारपक्षा सलिलनिधिगता सा नौः गतजलदे नभसि राजहंसीव रराज इत्यन्वयः।

अथ पराङ्मुखे समीरे प्रवृत्ते मुदितानां नौकाऽप्यावर्तनहर्षितानां जनानां प्रहासः आनन्दहास एव नादः कलः शब्दो यस्याः सा प्रविततानि प्रसारितानि पाण्डुराणि धवलानि शीतानि महापटा एव चारू पक्षौ यस्याः सा, सलिलनिधिगता जलधिमध्यवर्तिनी सा नौस्तरिः गतजलदे मेघापायविशदे नभसि राजहंसीव रराज शुशुभे। उपमालङ्कारः ॥२२॥

निवृत्तायां तु तस्यां नाव्यनुकूलसलिलमारुतायां विमानलीलया स्वेच्छयैव चाभिप्रयातायां नातिश्यामीभूतसन्ध्याङ्गरागासु प्रवितन्यमानतमोवितानःस्वालक्षितनक्षत्रभूषणासु दिक्षु किञ्चिदवशेषप्रभे दिवसकरमार्गे प्रवृत्तक्षणदाधिकारे सुपारगस्तान्वाणिजकानुवाच–भोः सार्थवाहा नलमालिप्रभृतिभ्यो यथादृष्टेभ्यः समुद्रेभ्यो बालुकाः पाषाणाश्च वहनमारोप्यन्तां यावत्सहते एवमिदं यानपात्रं निर्घातभराक्रान्तं न च पार्श्वानि दास्यति मङ्गलसम्मताश्चैते बालुकापाषाणा नियतं लाभसिद्धये वो भविष्यन्तीति। अथ ते सांयात्रिकाः सुपारगप्रेमबहुमाना वर्जितमतिभिर्देवताभिरनुप्रदर्शितेभ्यः स्थलेभ्य आदाय बालुकापाषाणबुद्ध्या वैडूर्यादीनि रत्नानि वहनमारोपयामासुः। तेनैव चैकरात्रेण सा नौर्भरुकच्छमुपजगाम।

विमानलीलया नभोयानरंहसा। न अतिश्यामीभूतः नाऽतिमलिनः सन्ध्याङ्गरागः सायंकालिकोऽरुणिमा यासां तासु। क्षणदा रात्रिः। वहनं तरणिम्। यावत्सहते नौरिति शेषः। निर्घातभराक्रान्तं दृढतरभारशालि, न च पार्श्वानि दास्यति आन्दोलितं न भविष्यति।

अथ प्रभाते रजतेन्द्रनीलवैडूर्यहेमप्रतिपूर्णनौकाः।
स्वदेशतीरान्तमुपागतास्ते प्रीत्या तमानर्चुरुदीर्णहर्षाः ॥२३॥

अथेति। अथ प्रभाते रजतेन्द्रनीलवैडूर्यहेमप्रतिपूर्णनौकाः स्वदेशतीरान्तमुपागताः ते उदीर्णहर्षाः (सन्तः) प्रीत्या तं आनर्चुः इत्यन्वयः।

रजतं रूप्यम्। इन्द्रनीलो हरन्मणिः। प्रतिपूर्णाः आपूरिताः। आनर्चुः सम्माननां चक्रुः। शेषं स्पष्टम् ॥२३॥

तदेवं धर्माश्रयं सत्यवचनमप्यापदं नुदति प्रागेव तत्फलमिति धर्मानुवर्तिना भवितव्यम् । कल्याणमित्राश्रयवर्णेऽपि वाच्यमेवं कल्याणमित्राश्रिताः श्रेयः प्राप्नुवन्तीति ।

इति सुपारगजातकम् ।

तदेवमिति जातकारम्भे व्याख्यातमेतत् । कल्याणानि कुशलावहानि मित्राण्येव आश्रयो येषां तेषां वर्णे कथाप्रसङ्गे । श्रेयः शुभम् ।

इति सुपारगजातकम् ।

—०:॥:०—

## अथ मत्स्यजातकम् ।

शीलवतामिहैवाभिप्रायाः कल्याणाः समृध्यन्ति प्रागेव परत्रेति शीलविशुद्धौ प्रयतितव्यम् । तद्यथानुश्रूयते । बोधिसत्त्वः किल कस्मिंश्चिन्नातिमहति कह्लारतामरसकमलकुवलयविभूषितरुचिरसलिले हंस-कारण्डव-चक्रवाक-मिथुनोपशोभिते तीरान्तरुहतरुकुसुमावकीर्णे सरसि मत्स्याधिपतिर्बभूव । स्वभ्यस्तभावाच्च बहुषु जन्मान्तरेषु परार्थचर्यायास्तत्रस्थोऽपि परहितसुखप्रतिपादनव्यापारो बभूव ।

शीलवतां सुचारित्र्यवतां कल्याणाः कोकोरकारपराः अभिप्रायाः व्यापाराः इहैव समृध्यन्ति सफलीभवन्तीत्यर्थः, प्रागेव परत्र परलोकात्प्रागेव इति हेतोः शीलविशुद्धौ मनःशोधने सदाचारे च प्रयतितव्यमिति योजना । नाऽतिमहति नाऽतिविस्तृते । कल्हारं सौगन्धिकं श्वेतकमलम् । तामरसं रक्तकमलम् । हंसा मरालाः । कारण्डवाः हंसविशेषाः, चक्रवाकाः रथाङ्गाह्वयाः एतेषां मिथुनैः युगलैरुपशोभिते । अवकीर्णे व्याप्ते । स्वभ्यस्तभावात् सम्यगभ्यस्तत्वात् । परार्थचर्यायाः परोपकारव्यवसायस्य ।

अभ्यासयोगाद्धि शुभाऽशुभानि कर्माणि सात्म्येन भवन्ति पुंसाम् ।
तथाविधान्येव यदप्रयत्नाज्जन्मान्तरे स्वप्न इवाचरन्ति ॥१॥

अभ्यासयोगादिति । हि अभ्यासयोगात् पुंसां शुभाशुभानि कर्माणि सात्म्येन भवन्ति, यत् अप्रयत्नात् तथाविधान्येव स्वप्न इव जन्मान्तरेऽपि आचरन्ति इत्यन्वयः ।

नूनं हि अभ्यासयोगात् सातत्येनाऽऽचरणात् पुंसां जनानां शुभाशुभानि उच्चावचानि कर्माणि सात्म्येन तादात्म्येन भवन्ति दृश्यन्ते, यत् यस्मात् अप्रयत्नात् अनायासेन तथाविधान्येव पूर्वजन्मगतानि कर्माणि स्वप्न इव स्वप्नकाल इव जन्मान्तरे द्वितीये जन्मन्यपि आचरन्ति जना इति शेषः ॥१॥

इष्टानामिव च स्वेषामपत्यानामुपरि निविष्टहार्दो महासत्त्वस्तेषां मीनानां दानप्रियवचनार्थचर्याविक्रमैः परमनुग्रहं चकार ।

इष्टानां बान्धवानाम् । निविष्टहार्दः निहितस्नेहः । दानं, प्रियवचनं मधुरभाषणम्, अर्थचर्या जीवननिर्वाहः, एतेषां क्रमैर्विधिभिः ।

अन्योन्यहिंसाप्रणयं नियच्छन्परस्परप्रेम विवर्धयंश्च ।
योगादुपायज्ञतया च तेषां विस्मारयामास स मत्स्यवृत्तम् ॥२॥

अन्योन्येति । सः उपायज्ञतया तेषां अन्योन्यहिंसाप्रणयं नियच्छन्, परस्परप्रेम विवर्धयंश्च योगात् च मत्स्यवृत्तं विस्मारयामास-इत्यन्वयः ।

स मत्स्याधिपतिः उपायज्ञतया नीतिकुशलतया तेषां मत्स्यानां अन्योन्यं परस्परं या हिंसा प्राणहरणं तत्र प्रणयं आग्रहं नियच्छन् प्रतिबध्नन्, परस्परप्रेम पारस्परिकं सौहार्दं विवर्धयन् पल्लवयंश्च योगात् च सौहार्दबद्धत्वाच्च मत्स्यवृत्तं जगति प्रसिद्धं मात्स्यन्यायं विस्मारयामास तिरश्चकार ॥ २ ॥

तत्तेन सम्यक्परिपाल्यमानं वृद्धिं परां मीनकुलं जगाम ।
पुरं विनिर्मुक्तमिवोपसर्गैर्न्यायप्रवृत्तेन नराधिपेन ॥३॥

तदिति । न्यायप्रवृत्तेन नराधिपेन ( सम्यक् परिपाल्यमानम् ) उपसर्गैः विनिर्मुक्तं पुरमिव, तेन सम्यक् परिपाल्यमानं तत् मीनकुलं परां वृद्धिं जगाम इत्यन्वयः ।

न्यायप्रवृत्तेन प्रजापालनोचितं नीतिमार्गमनुसरता नराधिपेन सम्यक्परिपाल्यमानं उपसर्गैर्बाह्यैराभ्यन्तरैश्चोत्पातैर्विनिर्मुक्तं रहितं पुरं नगरमिव, तेन मत्स्यनायकेन सम्यक् परिपाल्यमानं अनुशासितं तन्मीनकुलं परां वृद्धिं समृद्धिं जगाम प्राप ॥ ३ ॥

अथ कदाचित्सत्त्वानां भाग्यसम्पद्वैकल्यात्प्रमादाच्च वर्षाधिकृतानां देवपुत्राणां न सम्यग्देवो ववर्ष । अथासम्यग्वर्षिणि

देवे तत्सरः फुल्लकदम्बकुसुमगौरेण नवसलिलेन न यथापूर्वमापुपूरे। क्रमेण चोपगते निदाघकालसमये पटुतरदीप्तिभिः खेदालसगतिभिरिव च दिनकरकिरणैस्तदभितप्तया च धरण्या ज्वालानुगतेनेव च ह्लादाभिलाषिणा मारुतेन तर्षवशादिव प्रत्यहमापीयमानं तत्सरः पल्वलीबभूव।

सत्त्वानां जीवानाम्। प्रमादात् अनवधानात्। देवपुत्राणां देवताविशेषाणां मेघानां वा। देवः वासवः। फुल्लं विकचं यत् कदम्बकुसुमं नीपकुसुमं तद्वत् गौरेण। यथापूर्वं प्रतिवर्षानुसारम्। निदाघः ग्रीष्मकालः। पटुतरा अतितीव्रा दीप्तिर्भाः येषां तैः तदभितप्तया किरणाभितप्तया। ह्लादः आनन्दः शान्तिरित्यर्थः। तर्षः तृष्णा। पल्वलं अल्पसरः गर्ततुल्यम्। तथा बभूव।

निदाघकाले ज्वलितो विवस्वाञ्ज्वालाभिवर्षीव पटुश्च वायुः।
ज्वरातुरेवाशिशिरा च भूमिस्तोयानि रोषादिव शोषयन्ति॥ ४॥

निदाघकाल इति। निदाघकाले ज्वलितः ज्वालाभिवर्षीव विवस्वान् पटुः वायुश्च, ज्वरातुरेव अशिशिरा भूमिश्च रोषादिव तोयानि शोषयन्ति इत्यन्वयः।

निदाघकाले ग्रीष्मर्तौ ज्वलितः प्रतप्तः ज्वालाभिवर्षीव अग्निज्वालावर्षक इव विवस्वान् सूर्यः। 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः, पटुः परप्रतापनकुशलः वायुर्वातश्च, ज्वरेण दाहज्वरेण आतुरा व्याकुलेव अशिशिरा अभितप्ता भूमिः पृथ्वी च रोषादिव तोयानि जलानि शोषयन्ति पिबन्ति॥ ४॥

अथ बोधिसत्त्वो वायसगणैरपि परितर्क्यमाणं प्रागेव सलिलतीरान्तचारिभिः पक्षिगणैर्विषाददैन्यवशगं विस्पन्दितमात्रपरायणं मीनकुलमवेक्ष्य करुणायमानश्चिन्तामापेदे। कष्टा बतेयमापदापतिता मीनानाम्।

परितर्क्यमाणं अनुमीयमानाऽऽकारम्। विस्पन्दितमात्रपरायण-स्पन्दनैकसमुचिते जले विहरन्तम्। करुणायमाणः सकरुणाशयः।

प्रत्यहं क्षीयते तोयं स्पर्धमानमिवायुषा।
अद्यापि च चिरेणैव लक्ष्यते जलदागमः॥ ५॥

प्रत्यहमिति। प्रत्यहं आयुषा स्पर्द्धमानमिव तोयं क्षीयते, अद्याऽपि जलदागमः चिरेणैव लक्ष्यते इत्यन्वयः।

अयं भावः—यथा यथाऽनुदिनं जलं क्षीयते तथा जीविताऽऽशाऽपि, तथाऽपि वृष्टियोगस्तु दूर एव दृश्यते इति ॥ ५ ॥

अपयानक्रमो नास्ति नेताप्यन्यत्र को भवेत् ।
अस्मद्व्यसनसंकृष्टाः समायान्ति च नो द्विषः ॥ ६ ॥

अपयानक्रम इति । ( अस्माकं ) अपयानक्रमो नाऽस्ति, अन्यत्र नेता ( च ) को भवेत् ? अस्मद्व्यसनसंकृष्टा नो द्विषश्च समायान्ति इत्यन्वयः ।

अयं भावः—अस्माकं इतोऽपसरणस्य कश्चिदुपायोऽपि न दृश्यते, अन्यत्र नेता कश्चित्सहायोऽपि नास्ति, एवं च अस्माकमापदा लब्धाऽवसराः शत्रवः सन्निधौ समायान्ति इति ॥ ६ ॥

अस्य निःसंशयममिमे तोयशेषस्य संक्षयात् ।
स्फुरन्तो भक्षयिष्यन्ते शत्रुभिर्मम पश्यत ॥ ७ ॥

अस्येति । अस्य तोयशेषस्य संक्षयात् निःसंशयं स्फुरन्तः इमे ( मीनाः ) मम पश्यतः शत्रुभिर्भक्षयिष्यन्ते इत्यन्वयः ।

अयं भावः—अस्याऽवशिष्टस्य जलस्य परिक्षये सति मयि पश्यत्येव इमान् स्फुरतो मीनान् शत्रवः कवलीकरिष्यन्ति हन्त ! ॥ ७ ॥

तत्किमत्र प्राप्तकालं स्यादिति विमृशन्स महात्मा सत्याधिष्ठानमेकमार्तायनं ददर्श । करुणया च समापीड्यमानहृदयो दीर्घमुष्णमभिनिःश्वस्य नभः समुल्लोकयन्नुवाच—

विमृशन् विचिन्तयन् । सत्याधिष्ठानं सत्यभाषणरूपं, आर्तायनं आर्तमनोद्धारसाधनम् । समुल्लोकयन् ऊर्ध्वमवलोकयन् ।

स्मरामि न प्राणिवधं यथाहं सञ्चिन्त्य कृच्छ्रे परमेऽपि कर्तुम् ।
अनेन सत्येन सरांसि तोयैरापूरयन्वर्षतु देवराजः ॥ ८ ॥

स्मरामीति । सञ्चिन्त्य ( अपि ) परमेऽपि कृच्छ्रे यथाऽहं प्राणिवधं कर्तुं न स्मरामि ( तथा ) अनेन सत्येन सरांसि तोयैरापूरयन् देवराजः वर्षतु इत्यन्वयः ।

सञ्चिन्त्याऽपि सुचिरं विचिन्त्याऽपि परमेऽपि कृच्छ्रे महत्यामप्यापदि यथाऽहं प्राणिवधं प्राणिहिंसां कर्तुं न स्मरामि कदाऽपि प्राणिहिंसा यथा मे मनोगता न बभूव, तथा अनेन सत्येन मम सत्यरक्षणव्रतेन सरांसि सरोवराणि तोयैर्जलैरापूरयन् सन्नर्दयन् देवराजो वासवः वर्षतु वृष्टिं विधत्ताम् ॥ ८ ॥

अथ तस्य महात्मनः पुण्योपचयगुणात्सत्याधिष्ठानबलात्तदभिप्रसादितदेवनागयक्षानुभावाच्च समन्ततस्तोयावलम्बिबिम्बा गम्भीरमधुरनिर्घोषा विद्युल्लतालङ्कृतनीलविपुलशिखरा विजृम्भमाणा इव प्रविसर्पिभिः शिखरभुजैः परिष्वजमाना इव चान्योन्यमकालमेघाः कालमेघाः प्रादुरभवन् ।

पुण्यानामदृष्टानां उपचयः समृद्धिः स एव गुणस्तस्मात् । तेन सत्याधिष्ठानेन अभिप्रसादिताः प्रसन्नाः देव-नाग-यक्षास्तेषामनुभावात् प्रभावाच्च । बिम्बं शरीरम् । शिखराणि ऊर्ध्वभागाः । विजृम्भमाणाः प्रसरन्त इव । परिष्वजमानाः आलिङ्गन्त इव । अकाले असमये मेघाः अकालमेघाः । कालमेघाः कृष्णवर्णा जलदाः ।

दिशां प्रमिण्वन्त इव प्रयामं शृङ्गैर्वितन्वन्त इवान्धकारम् ।
नभस्तलादर्शगता विरेजुश्छाया गिरीणामिव कालमेघाः ॥९॥

दिशामिति । शृङ्गैर्दिशां प्रयामं प्रमिण्वन्त इव अन्धकारं वितन्वन्त इव नभस्तलाऽऽदर्शगताः गिरीणां छायाः इव कालमेघाः विरेजुः इत्यन्वयः ।

शृङ्गैरग्रभागैर्दिशां काष्ठानां प्रयामं अन्तरालदैर्घ्यं प्रमिण्वन्त इव सूचयन्त इव अन्धकारं तिमिरप्रतानं वितन्वन्तः निर्मिमाणा इव, नभस्तलमेव आदर्शः दर्पणः तत्र गताः प्रतिबिम्बिता गिरीणां पर्वतानां छायाः रूपाणीव कालमेघाः कृष्णवर्णाः जलदाः विरेजुर्बभुः । उत्प्रेक्षालङ्कारः ॥ ९ ॥

संसक्तकेकैः शिखिभिः प्रहृष्टैः संस्तूयमानाः इव नृत्तचित्रैः ।
प्रसक्तमन्द्रस्तनिता विरेजुर्धीरप्रहासादिव ते घनौघाः ॥१०॥

संसक्तकेकैरिति । नृत्तचित्रैः संसक्तकेकैः प्रहृष्टैरिव शिखिभिः संस्तूयमानाः धीरप्रहासादिव प्रसक्तमन्द्रस्तनिताः ते घनौघाः विरेजुः इत्यन्वयः ।

नृत्तैर्नानाविधैर्लास्यप्रकारैश्चित्रैर्विचित्राकृतिभिः संसक्ता प्रारब्धा केका स्ववाणी यैस्तैः 'केका वाणी मयूरस्य' इत्यमरः । प्रहृष्टैर्हर्षितैरिव शिखिभिर्मयूरैः संस्तूयमानाः कृतस्तुतयः अत एव धीरं गम्भीरं यथा स्यात्तथा प्रहासादिव हसितादिव हसितरूपेणेवेत्यर्थः । प्रसक्तमारब्धं मन्द्रं गभीरमधुरं स्तनितं गर्जितं येषां ते, ते घनौघाः मेघसमूहाः विरेजुः शुशुभिरे । केकिभिः स्तूयमानाः प्रत्युत्तरमिव प्रायच्छन्निति भावः ॥१०॥

मुक्ता विमुक्ता इव तैर्विमुक्ता धारा निपेतुः प्रशशाम रेणुः ।
गन्धश्चचारानिभृतो धरण्यां विकीर्यमाणो जलदानिलेन ॥११॥

मुक्ता इति । विमुक्ता मुक्ता इव तैर्विमुक्ता धाराः निपेतुः, रेणुः प्रशशाम, जलदानिलेन विकीर्यमाणः अनिभृतो गन्धः धरण्यां चचार, इत्यन्वयः ।

विमुक्ताः नभसः क्षिप्ताः मुक्ताः मुक्ताफलानीव तैर्विमुक्ताः जलधरैरुत्सृष्टाः धाराः आसाराः निपेतुरपतन्, तेन च रेणुः धूलिभरः, प्रशशाम शान्तेऽभूत्, जलदानिलेन मेघवातेन विकीर्यमाणः परितः प्रसार्यमाणः अनिभृतः प्रसरणशीलः गन्धः धरण्यां चचार बभ्राम ॥११॥

निदाघसम्पर्कविवर्धितोऽपि तिरोबभूवार्ककरप्रभावः ।
फेनावलीव्याकुलमेखलानि तोयानि निम्नाभिमुखानि सस्रुः ॥१२॥

निदाघेति । निदाघसंपर्कविवर्धितोऽपि अर्ककरप्रभावः तिरोबभूव, फेनावलीव्याकुलमेखलानि तोयानि निम्नाभिमुखानि सस्रुः इत्यन्वयः ।

अयं भावः—ग्रीष्मर्तुवशात्प्रखरतरोऽपि भानुप्रकाशो जलदमण्डलपिहिततयाऽन्तर्दधौ, सफेनानि जलानि च निम्नाभिमुखमभिसस्रुः इति । मेखला जलवेणिका ॥

मुहुर्मुहुः काञ्चनपिञ्जराभिर्भाभिर्दिगन्ताननुरञ्जयन्ती ।
पयोदतूर्यस्वनलब्धहर्षा विद्युल्लता नृत्तमिवाचचार ॥१३॥

मुहुरिति । मुहुर्मुहुः काञ्चनपिञ्जराभिः भाभिः दिगन्तान् अनुरञ्जयन्ती पयोदतूर्यस्वनलब्धहर्षा विद्युल्लता नृत्तमिव आचचार इत्यन्वयः ।

मुहुर्मुहुः भूयो भूयः काञ्चनवत् पिञ्जराभिः पिङ्गलवर्णाभिः भाभिः स्वकान्तिभिः दिगन्ताननुरञ्जयन्ती दिङ्मुखानि द्योतयन्ती पयोदा एव तूर्याणि वाद्यविशेषाः तेषां स्वनेन शब्देन लब्धहर्षा सञ्जातप्रमोदा विद्युल्लता सौदामिनी नर्तकीवेति व्यज्यते नृत्तं लास्यमिव आचचार अकरोत् ॥१३॥

अथ बोधिसत्त्वः समन्ततोऽभिप्रसृतैरापाण्डुभिः सलिलप्रवाहैरापूर्यमाणे सरसि धारानिपातसमकालमेव विद्रुते वायसाद्ये पक्षिगणे प्रतिलब्धजीविताशे च प्रमुदिते मीनगणे प्रीत्याभिसार्यमाणहृदयो वर्षनिवृत्तिसाशङ्कः पुनः पुनः पर्जन्यमाबभाषे ।

विद्रुते पलायिते । प्रीत्या आनन्देन अभिसार्यमाणमापूर्यमाणं हृदयं यस्य सः । पर्जन्यं वृष्टिदेवताम् ।

उद्गर्ज पर्जन्य गभीरधीरं प्रमोदमुद्धासय वायसानाम् ।
रत्नायमानानि पयांसि वर्षन्संसक्तविद्युज्ज्वलितद्युतीनि ॥१४॥

उद्गर्जेति । हे पर्जन्य । गभीरधीरं उद्गर्ज । संसक्तविद्युज्ज्वलितद्युतीनि रत्नायमानानि पयांसि वर्षन् वायसानां प्रमोदमुद्धासय इत्यन्वयः ।

हे पर्जन्य ! वर्षाधिपते ! गभीरं मन्द्रं अत एव धीरं धैर्यावष्टब्धमिव च उद्गर्ज ! उच्चैर्गर्जनां विधेहि, संसक्ताऽनुविद्धा विद्युतां ज्वलिता भासुरा द्युतिः कान्तिर्येषु तानि अत एव रत्नायमानानि रत्नवद् भासमानानि पयांसि जलानि वर्षन् वायसानां रिपूणां काकानां प्रमोदं मत्स्यलाभकृतं हर्षं उद्धासय अपसारय ॥१४॥

तदुपश्रुत्य शक्रो देवानामिन्द्रः परमविस्मितमनाः साक्षादभिगम्यैनमभिसंराधयन्नुवाच—

शक्र इति वासवस्य नाम, देवानां इन्द्रः राजेत्यर्थः, अभिसंराधयन् संतुवन् ।

तवैव खल्वेष महानुभाव ! मत्स्येन्द्र ! सत्यातिशयप्रभावः ।
आवर्जिता यत्कलशा इवेमे क्षरन्ति रम्यस्तनिताः पयोदाः ॥१५॥

तवैवेति । हे महानुभाव ! मत्स्येन्द्र ! एष तवैव सत्यातिशयप्रभावः खलु, यत् आवर्जिताः कलशा इव रम्यस्तनिता इमे पयोदाः क्षरन्ति इत्यन्वयः ।

हे महानुभाव ! महाप्रभाव ! मत्स्येन्द्र ! मीननायक ! एष तवैव तावकीन एव सत्यातिशयस्य सत्यव्रतस्य प्रभावः अस्ति खलु, यत् आवर्जिता अवनमिताः कलशा इव घटा इव रम्यस्तनिता हृद्यगर्जिताः इमे पयोदाः क्षरन्ति, जलं वर्षन्ति । तव सत्यनिष्ठाया एवैतत्फलमिति भावः ॥१५॥

महत्प्रमादस्खलितं त्विदं मे यन्नाम कृत्येषु भवद्विधानाम् ।
लोकार्थमभ्युद्यतमानसानां व्यापारयोगं न समभ्युपैमि ॥१६॥

महदिति । इदं तु मे महत् प्रमादस्खलितं ( अस्ति ), यन्नाम लोकार्थमभ्युद्यतमानसानां भवद्विधानां कृत्येषु व्यापारयोगं न समभ्युपैमि इत्यन्वयः ।

इदं तु एतत् किल मे महत् प्रमादनाऽनवधानेन जनितं स्खलितमपराधः ( अस्ति ) यन्नाम लोकार्थं लोकोपकाराय अभ्युद्यतं तत्परं मानसं चित्तं येषां भवद्विधानां महात्मनां कृत्येषु कार्यविशेषेषु व्यापारयोगं साहाय्यकं न समभ्युपैमि न कृतवानस्मि ॥१६॥

चिन्तां कृथा मा तदतः परं त्वं सतां हि कृत्योद्वहनेऽस्मि धुर्यः।
देशोऽप्ययं त्वद्गुणसंश्रयेण भूयश्च नैवं भवितार्तिवश्यः ॥१७॥

चिन्तामिति। तत् चिन्तां मा कृथाः, हि अतः परन्तु सतां कृत्योद्वहने धुर्यः अस्मि, भूयश्च त्वद्गुणसंश्रयेण अयं देशोऽपि एवं आर्तिवश्यो न भविता इत्यन्वयः।

तत् तस्मात् चिन्तां विचारदुःखं मा कृथाः मा कार्षीः, हि यतः अतः परन्तु अद्यप्रभृति तु सतामुदारचेतसां महात्मनां कृत्योद्वहने कार्यसम्पादने धुर्यः अग्रेसरः अस्मि, भूयश्च पुनरपि च त्वद्गुणसंश्रयेण त्वद्गुणावलम्बेन अयं देशोऽपि एवं अनावृष्ट्यादिभिरुत्पातैरार्तिवश्यः क्लेशाकुलः न भविता न भविष्यति ॥१७॥

इत्येवं प्रियवचनैः संराध्य तत्रैवान्तर्दधे। तच्च सरः परां तोयसमृद्धिमवाप। तदेवं शीलवतामिहैवाभिप्रायाः कल्याणाः समृध्यन्ति प्रागेव परत्रेति शीलविशुद्धौ प्रयतितव्यम्।

इति मत्स्यजातकम्।

संराध्य स्तुतिं विधाय। तदेत्रमिति पूर्वं व्याख्यातमेतत्।

इति मत्स्यजातकम्।

—:०:—

## अथ वर्तकापोतकजातकम्।

सत्यपरिभावितां वाचमग्निरपि न प्रसहते लङ्घयितुमिति सत्यवचनेऽभियोगः करणीयः॥ तद्यथानुश्रूयते। बोधिसत्त्वः किलान्यतमस्मिन्नरण्यायतने वर्तकापोतको भवति स्म। स कतिपयरात्रोद्भिन्नाण्डकोशः प्रविरोक्ष्यमाणतरुणपक्षः परिदुर्बलत्वादलक्ष्यमाणाङ्गप्रत्यङ्गप्रदेशः स्वमातापितृप्रयत्नरचिते तृणगहनोपगूढे गुल्मलतासंनिश्रिते नीडे संबहुलैर्भ्रातृभिः सार्धं प्रतिवसति स्म। तदवस्थोऽपि चापरिलुप्तधर्मसंज्ञत्वान्मातापितृभ्यामुपहृतान्प्राणिनो नेच्छति स्माभ्यवहर्तुम्। यदेव त्वस्य तृणबीजन्यग्रोधफलाद्युपजह्रतुर्मातापितरौ तेनैव वर्तयामास। तस्य तया रूक्षाल्पाहारतया न कायः पुष्टिमुपययौ। नापि पक्षौ सम्यक्प्रविरोहतुः। इतरे तु वर्तकापोतका यथोपनीतमाहारमभ्यवहरन्तो बलवन्तः सञ्जातपक्षाश्च बभूवुः। धर्मता ह्येषा यदुत—

सत्येन ऋतेन परिभावितां तेजोमयीं वाचम् । प्रसहते क्षमते । अभियोगः अभिनिवेशः । अरण्यस्य वनस्य आयतनं स्थानं तस्मिन् । वर्तकापोतकः वनचटक-शिशुः । कतिपयरात्रोद्भिन्नाण्डकोषः कतिपयदिवसातिक्रमे यथासमयं अण्डमध्या-न्निर्गतः, प्रविरोक्ष्यमाणौ उत्पत्स्यमानौ तरुणौ कोमलौ पक्षौ यस्य सः । तृणगहनं तृणकुञ्जं तेन उपगूढे आच्छन्ने गुल्मलता गहनलता तस्यां संनिश्रितं रचित तस्मिन् । नीडे कुलाये 'कुलायो नीडमस्त्रियाम्'इत्यमरः । संबहुलैः बहुसंख्यैः । धर्मसंज्ञा धर्मज्ञानम् । प्राणिनः कीटादीन् । अभ्यवहर्तुम् अत्तुम् । न्यग्रोधो वटः । वर्तयामास जीवनवृत्तिं चकार । कायः शरीरम् । प्रविरुरोहतुः प्ररूढौ । धर्मता हि एषा एष खलु स्वभावः ।

धर्माधर्मनिराशङ्कः सर्वाशी सुखमेधते ।
धर्म्यां तु वृत्तिमन्विच्छन्विचिताशीह दुःखितः ॥ १ ॥

धर्माधर्मेति । धर्माऽधर्मनिराशङ्कः सर्वाशी ( जनः ) सुखमेधते, धर्म्यां वृत्तिं अन्विच्छन् विचिताशी ( जनस्तु ) इह दुःखितः ( भवति ) इत्यन्वयः ।

अयं भावः—धर्माधर्मविचारशून्यः सर्वभक्षकः प्राणी शरीरकार्श्यादि दुःखं नानुभवति, धर्मसंमतमार्गानुगामी जनस्तु सर्वदा क्लेशभाग् भवतीति लोकसिद्ध-मेतदिति ॥ १ ॥

[ अपि चोक्तं भगवता सुजीवितमह्रीकेणेति गाथाद्वयम् ।
( अपि चोक्तमित्यारभ्य—निकाये पठ्यते इत्येतावानंशः प्रक्षिप्तः प्रतिभाति । सोऽपि विव्रियते ) भगवता बोधिसत्त्वेन ।

सुजीवितमह्रीकेण ध्वाङ्क्षेणाशुचिकर्मणा ।
प्रस्कन्दिना प्रगल्भेन सुसंक्लिष्टं तु जीवितम् ॥ २ ॥

सुजीवितमिति । अशुचिकर्मणा अह्रीकेण ध्वांक्षेण सुजीवितं, प्रस्कन्दिना प्रगल्भेन तु सुसंक्लिष्टं जीवितमित्यन्वयः ।

अशुचिकर्मणा भक्ष्याऽभक्ष्यविचारशून्येन अत एव अह्रीकेण विगतलज्जेन ध्वांक्षेण काकेन सुजीवितं सुखेन जीव्यते, प्रस्कन्दिना धर्माधर्मविचारवता प्रगल्भेन कृशानेन जनेन तु सुसंक्लिष्टं कष्टसहित जीवितमनुभूयत इति शेषः । अत एव जिह्वाया लज्जास्थानत्वं शास्त्रेषूपवर्ण्यते ॥ २ ॥

ह्रीमता त्विह दुर्जीवं नित्यं शुचिगवेषिणा।
संलीनेनाप्रगल्भेन शुद्धाजीवेन जीवता ॥ ३ ॥

ह्रीमतेति। नित्यं शुचिगवेषिणा शुद्धाजीवेन जीवता संलीनेन अप्रगल्भेन ह्रीमता तु इह दुर्जीवमित्यन्वयः।

नित्यं सततं शुचिगवेषिणा पवित्रशीलेन शुद्धः हिंसादिरहितो य आजीवः जीवननिर्वाहसाधनं तेन जीवता वृत्तिं कुर्वता संलीनेन यमनियमाद्यनुवर्तिना अप्रगल्भेन धर्मपरतन्त्रेण ह्रीमता तु इह जगति दुर्जीवं दुःखेन जीवितुं पार्यते इति ॥३॥

इति गाथाद्वयमेतदार्यस्थाविरीयकनिकाये पठ्यते ]। तेषामेवमवस्थानां नातिदूरे महान्वनदावः प्रतिभयप्रसक्तनिनदो विजृम्भमाणधूमराशिविकीर्यमाणज्वालावलीलोलविस्फुलिङ्गः सन्त्रासनो वनचराणामनयो वनगहनानां प्रादुरभवत्।

आर्यस्थाविरीयकनिकाये ग्रन्थविशेषे।

वनदावः वनवह्निः। प्रतिभयं सभयं प्रसक्तः संजातः निनदः शब्दो यस्य सः। विकीर्यमाणाः प्रसरन्त्यः या ज्वालावल्यस्तासु लोलाः चचलाः विस्फुलिङ्गाः अग्निकणाः यस्य सः। अनयः अरक्षको भक्षक इत्यर्थः।

स मारुताघूर्णितविप्रकीर्णैर्ज्वालाभुजैर्नृत्तविशेषचित्रैः।
वल्गन्निव व्याकुलधूमकेशः सस्वान तेषां धृतिमाददानः ॥४॥

स इति। मारुताघूर्णितविप्रकीर्णैः नृत्तविशेषचित्रैः ज्वालाभुजैर्वल्गन्निव व्याकुलधूमकेशः सः, तेषां धृतिमाददानः सस्वान इत्यन्वयः।

मारुतस्य वायोः आघूर्णितेन भ्रमणेन विप्रकीर्णैः प्रसारितैर्नृत्तविशेषैः विविधैर्लास्यप्रकारैरिव कम्पितैः चित्रैः विचित्राकृतिभिः ज्वालात्मकैर्भुजैर्ज्वालाभुजैर्वल्गन्निव नृत्यन्निव, व्याकुलः व्यस्तः धूम एव केशः जटाजूटो यस्य सः वनहुताशनः तेषां पक्षिणां धृतिमाददानः धैर्यं विलुम्पन, सस्वान ननाद। एतेन नर्तकसाम्यं गम्यते ॥ ४ ॥

चण्डानिलास्फालनचञ्चलानि भयद्रुतानीव वने तृणानि।
सोऽग्निः ससंरम्भ इवाभिपत्य स्फुरत्स्फुलिङ्गप्रकरो ददाह ॥५॥

चण्डानिलेति। वने चण्डानिलास्फालनचञ्चलानि भयद्रुतानि इव तृणानि, स्फुरत्स्फुलिङ्गप्रकरः ससंरम्भ इव सोऽग्निरभिपत्य ददाह इत्यन्वयः।

वने काननान्तः चण्डः प्रचण्डो योऽनिलो वातस्तत्कृतं यदास्फालनं ताडनं तेन चंचलानि सकम्पानि अत एव भयद्रुतानीव भयव्याकुलानीव तृणानि घासराशिं, स्फुरन्तः चंचलन्तः स्फुलिङ्गनिकराः अग्निकणाः यस्य सः अत एव संरम्भ इव प्रकोप इव सोऽग्निर्दावानलः अभिसृत्य आक्रम्य ददाह ॥५॥

भयद्रुतोद्भ्रान्तविहङ्गसार्थं परिभ्रमद्भीतमृगं समन्तात् ।
धूमौघमग्नं पटुवह्निशब्दं वनं तदार्त्येव भृशं ररास ॥ ६ ॥

भयद्रुतेति । समन्तात् भयद्रुतोद्भ्रान्तविहङ्गसार्थं परिभ्रमद्भीतमृगं धूमौघमग्नं पटुवह्निशब्दं तद् वनं आर्त्या इव भृशं ररास इत्यन्वयः ।

समन्तात् सर्वतः भयेन द्रुताः पलायिताः उद्भ्रान्ताः सोद्वेगाश्च विहङ्गसार्थाः पक्षिसमूहाः यस्मिंस्तत्, परिभ्रमन्तः परितो धावन्तः भीताश्च मृगा हरिणादयः यस्मिंस्तत्, धूमौघे धूमपटले मग्नं, पटुर्महान् वह्निशब्दो दावानलध्वनिर्यत्र तत्, तत् वनं आर्त्या दाहजनितक्लेशेनेव भृशमुच्चैः ररास शब्दं चकार, विललाप इवेति भावः ॥ ६ ॥

क्रमेण चोत्पीड्यमान इव स वह्निः पटुना मारुतेन तृणगहनानुसारी तेषां नीडसमीपमुपजगाम । अथ ते वर्तकापोतका भयविरसव्याकुलविरावाः परस्परनिरपेक्षाः सहसा समुत्पेतुः । परिदुर्बलत्वादप्ररूढपक्षत्वाच्च बोधिसत्त्वस्तु नोत्पतितुं प्रयत्नं चकार । विदितात्मप्रभावस्त्वसम्भ्रान्त एव स महासत्त्वः सरभसमभिवोपसर्पन्तमग्निं सानुनयमित्युवाच—

उत्पीड्यमानो विद्रावित इव ।

व्यर्थाभिधानचरणोऽस्म्यविरूढपक्ष—
स्त्वत्सम्भ्रमाच्च पितरावपि मे प्रलीनौ ।
त्वद्योग्यमस्ति न च किञ्चिदिहातिथेय-
मस्मान्निवर्तितुमतस्तव युक्तमग्ने ॥ ७ ॥

व्यर्थाभिधानेति । हे अग्ने ! व्यर्थाभिधानचरणः अविरूढपक्षश्च अस्मि, त्वत्संभ्रमाच्च मे पितरावपि प्रलीनौ, इह त्वद्योग्यं किञ्चिदातिथेयमपि च नाऽस्ति अतस्तव अस्मान्निवर्तितुं युक्तमित्यन्वयः ।

हे अग्ने ! दावाग्ने ! व्यर्थाभिधानो व्यर्थसंज्ञो चरणौ पादौ यस्य सः चङ्क्रमितु-

मसमर्थत्वात्, तथाविधः, अविरूढौ अप्ररूढौ पक्षौ यस्य सः उत्पतितुमप्रभुरित्यर्थः, तादृशश्च अस्मि, त्वत्संभ्रमाच्च त्वदुपगमभयाच्च मे पितरौ मातापितरावपि डीनौ उड्डीय क्वाऽपि गतौ, इह कोटरे त्वद्योग्यं तवानुरूपं किंचिदातिथेयं भक्ष्यरूपं अपि च नाऽस्ति, अतस्तव अस्मात् स्थानात् निवर्तितु युक्तं निवर्तनमेव समुचितमिति ॥

इत्युक्ते सत्यपरिभावितवचसा तेन महासत्त्वेन—

इत्युक्ते सतीति शेषः। सत्यपरिभावितवचसा सत्योज्ज्वलेन वचसा।

उदीर्यमाणोऽप्यनिलेन सोऽग्निर्विशुष्कसंसक्ततृणेऽपि कक्षे।
नदीमिव प्राप्य विवृद्धतोयां तद्वाचमासाद्य शशाम सद्यः ॥ ८ ॥

उदीर्यमाण इति। विशुष्कसंसक्ततृणेऽपि कक्षे, अनिलेन उदीर्यमाणोऽपि सोऽग्निः विवृद्धतोयां नदीं प्राप्य इव तद्वाचमासाद्य सद्यः शशाम इत्यन्वयः।

विशुष्काणि अनार्द्राणि संसक्तानि सान्द्राणि तृणानि यत्र तस्मिन् अपि कक्षे शुष्केन्धनसमूहे अनिलेन वातेन उदीर्यमाणोऽपि वृद्धिं नीयमानोऽपि सोऽग्निः विवृद्धतोयां कूलातिगजलां नदीं प्राप्य इव तद्वाचं तस्य बोधिसत्त्वात्मनो वर्तकापोतकस्य वाचमासाद्य श्रुत्वा सद्यस्तत्क्षण एव शशाम व्यरंसीत् ॥ ८ ॥

अद्यापि तं हिमवति प्रथितं प्रदेशं
दावाग्निरुद्धतशिखोऽपि समीरणेन।
मन्त्राभिशप्त इव नैकशिरा भुजङ्गः
सङ्कोचमन्दलुलितार्चिरुपैति शान्तिम् ॥ ९ ॥

अद्यापीति। अद्याऽपि समीरणेन उद्धतशिखोऽपि दावाग्निः हिमवति प्रथितं तं प्रदेशं ( प्राप्य ), मन्त्राऽभिशप्तो नैकशिरा भुजङ्ग इव सङ्कोचमन्दलुलितार्चिः शान्तिमुपैति इत्यन्वयः।

अद्याऽपि अद्यत्वेऽपि समीरणेन उद्धतशिखोऽपि प्रसृमरज्वालोऽपि दावाग्निर्वनवह्निः हिमवति पर्वते प्रथितं प्रसिद्धं तं प्रदेशं प्राप्य मन्त्रेण अभिशप्तो हतः नैकशिराः नैकधाभिन्नमस्तको भुजङ्ग इव सङ्कोचेन अवरोधेन मन्दं शिथिलं लुलितं अल्पीभूतं अर्चिः ज्वाला यस्य सः तथाविधः सन् शान्तिमुपैति, स्वयमेव शाम्यति। उपमालङ्कारः ॥ ९ ॥

तत्किमिदमुपनीतमिति, उच्यते—
उपनीत आयातम्।

वेलामिव प्रचलितोर्मिफणः समुद्रः शिक्षां मुनीन्द्रविहितामिव सत्यकामः ।
सत्यात्मनामिति न लङ्घयितुं यदाज्ञां शक्तः कृशानुरपि सत्यमतो न जह्यात् ॥

वेलामिवेति । प्रचलितोर्मिफणः समुद्रो वेलामिव, मुनीन्द्रविहितां शिक्षां सत्यकाम इव, इति यत् सत्यात्मनां आज्ञां लङ्घयितुं कृशानुरपि न शक्तः (अभूत्), अतः सत्यं न जह्यात् इत्यन्वयः ।

प्रचलिता ऊर्मयस्तरङ्गा एव फणाः शिरांसि यस्य सः समुद्रः वेलां तीरभूमिमिव, मुनीन्द्रेण बोधिसत्त्वेन विहितामुपदिष्टां शिक्षां धर्मोपदेशं सत्यकामः सत्यव्रती भिक्षुरिव, इति पूर्वोक्तप्रकारेण यत् यतः सत्यात्मनां सत्यव्रते दृढानां आज्ञामनुशासनं लङ्घयितुं कृशानुर्वह्निरपि न शक्तः अभूत् समर्थो नाऽभवत्, अतः सत्यं सत्यपालनं न जह्यात् न त्यजेत्, श्रेयोऽभिलाषी जन इति शेषः। मालोपमाऽलङ्कारः ।

तदेवं सत्यवचनपरिभाविताां वाचमग्निरपि न प्रसहते लङ्घयितुमिति सत्यवचनेऽभियोगः करणीयः। तथागतवर्णेऽपि वाच्यमिति ॥

तदेवमिति व्याख्यातपूर्वम् । तथागतवर्णे बोधिसत्त्वमाहात्म्ये ।

इति वर्तकापोतकजातकम् ।

—०❀०—

## अथ बिसजातकम् ।

अविवेकसुखरसज्ञानां विडम्बनेव विहिंसेव च कामाः प्रतिकूला भवन्ति । तद्यथानुश्रूयते बोधिसत्त्वः किल कस्मिंश्चिन्महति गुणप्रकाशयशसि वाच्यदोषविरहिते ब्राह्मणकुले जन्मपरिग्रहं चकार। तस्य यत्र कनीयांसः षडपरे भ्रातरस्तदनुरूपगुणाः स्नेहबहुमानगुणान्नित्यानुगुणा बभूवुः सप्तमी च भगिनी स कृतश्रमः साङ्गेषु सोपवेदेषु वेदेषु समधिगतविद्यायशाः सम्मतो जगति दैवतवन्मातापितरौ परया भक्त्या परिचरन्नाचार्य इव पितेव तान्भ्रातॄन्विद्यासु विनयज्ञयविनयकुशलो गृहमावसति स्म । स कालक्रमान्मातापित्रोः कालक्रियया संविग्नहृदयः कृत्वा तयोः प्रेतकृत्यानि व्यतीतेषु शोकमयेष्विव केषुचिदेव दिवसेषु तान्भ्रातॄन्समभिसन्निपात्योवाच—

प्रविवेको धर्मानुभवस्तस्य यत् सुखं तद्रसज्ञानां तदेकपरचेतसां महात्मनां प्रतिकूलाः विपरीता कामा आचरणानि विडम्बनेव उपहास इव, विहिंसेव मानसिकं हननमिव च भवन्तीत्यन्वयः। यथाऽस्मिन्नेव जातके शक्रस्य बोधिसत्त्वविषये प्रतिकूलमाचरणम्। गुणैः शौचदयादाक्षिण्यादिभिः प्रकाशं स्फुटं यशो यस्य तस्मिन्। वाच्यदोषः अपवादः। बहुमान आदरः। अनुगुणा अनुवर्तिनः। उपवेदाः गान्धर्वादयस्तेन सहितेषु। परिचरन् सेवमानः विनयन् शिक्षयन्। कालक्रियया परलोकवासेन। सन्निपात्य आहूय।

> एष लोकस्य नियतः शोकातिविरसः क्रमः।
> सह स्थित्वाऽपि सुचिरं मृत्युना यद्वियोज्यते ॥ १ ॥

एष इति। एष ( खलु ) लोकस्य शोकातिविरसः क्रमः नियतः, यत् सुचिरं सह स्थित्वाऽपि मृत्युना वियोज्यते इत्यन्वयः।

एष खलु अयं किल लोकस्य संसारस्य 'लोकस्तु भुवने जने' इति कोशः। शोकेन अनुतापेन अतिविरसः कटुः क्रमः परिणामो नियतः अस्तीति शेषः, यत् सुचिरं बहुकालपर्यन्तं सह स्थित्वाऽपि एकत्र सानन्द निवसन्नपि ( जनः ) मृत्युना अन्तकेन वियोज्यते दूरीक्रियते ॥ १ ॥

> तत्प्रव्रजितुमिच्छामि श्रेयःश्लाघ्येन वर्त्मना।
> पुरा मृत्युरिपुर्हन्ति गृहसंरक्तमेव माम् ॥ २ ॥

तदिति। तत् ( अहं ) श्रेयः श्लाघ्येन वर्त्मना प्रव्रजितुमिच्छामि, (अन्यथा) गृहसंरक्तमेव मां पुरा मृत्युरिपुर्हन्ति इत्यन्वयः।

ततस्मादहं श्रेयसा कल्याणेन कल्याणाधिगमेन श्लाघ्यं स्पृहणीयं तेन वर्त्मना पथा प्रव्रजितुं सन्यासं गृहीतुमिच्छामि, अन्यथा गृहसंरक्त गृहकर्मव्यासक्तमेव मां पुरा भविष्यति काले मृत्युरूपो रिपुः शत्रुः हन्ति हनिष्यति। पुरायोगे भविष्यति लट् ॥ २ ॥

यत सर्वानेव भवतः सम्बोधयामि। अस्त्यत्र ब्राह्मणकुले धर्मेण यथाभिमता विभवमात्रा शक्यमनया वर्तितुम्। तत्सर्वैरेव भवद्भिः परस्पर स्नेहगौरवाभिमुखैः शीलसमुदाचारेष्वशिथिलादारैर्वेदाध्ययन-

परैर्मित्रातिथिस्वजनप्रणयवत्सलैर्धर्मपरायणैर्भूत्वा सम्यग्गृहमध्याव-स्तव्यम् ।

अत्र अस्मिन् ब्राह्मणकुले । विभवमात्रा उपयुक्ता सम्पत्तिः । वर्तितुं जीवन-निर्वाहं कर्तुम् । प्रणयेन प्रेम्णा वत्सलैः सस्नेहैः ।

विनयश्लाघिभिर्नित्यं स्वाध्यायाध्ययनोद्यतैः ।
प्रदानाभिरतैः सम्यक्परिपाल्यो गृहाश्रमः ॥ ३ ॥

विनयश्लाघिभिरिति । नित्यं विनयश्लाघिभिः स्वाध्यायाऽध्ययनोद्यतैः प्रदानाभिरतैः ( भवद्भिः ) गृहाश्रमः सम्यक् परिपाल्यः इत्यन्वयः ।

नित्यं सततं विनयश्लाघिभिर्विनम्राकृतिभिः स्वाध्यायस्य वेदभागस्य अध्ययने पारायणादौ उद्यतैस्तत्परैः, प्रदाने वितरणे अभिरतैः साऽभिनिवेशैश्च भवद्भिः गृहाश्रमः गृहधर्मः सम्यक् परिपाल्यः अनुष्ठेयः ॥ ३ ॥

एवं हि वः स्याद्यशसः समृद्धिर्धर्मस्य चार्थस्य सुखास्पदस्य ।
सुखावगाहश्च परोऽपि लोकस्तदप्रमत्ता गृहमावसेत ॥४॥

एवमिति । एवं हि वः यशसः सुखास्पदस्य धर्मस्य अर्थस्य च समृद्धिः स्यात्, परोऽपि लोकः सुखावगाहश्च भवेत् तत् अप्रमत्ता गृहं आवसेत इत्यन्वयः ।

एवं अनया रीत्या वो युष्माकं यशसः, सुखास्पदस्य कल्याणनिदानस्य धर्मस्य अर्थस्य च धर्मार्थयोर्द्वयोरपि समृद्धिरुन्नतिः स्यात्, परोऽपि लोकः स्वर्लोकोऽपि सुखेन अवगाढु प्रवेष्टुं योग्यः सुखावगाहः तथाविधश्च भवेत्, तत्तस्मात् अप्रमत्ताः सावधानाः सन्तो भवन्तः गृहं आवसेत गृहे निवसत ॥ ४ ॥

अथास्य भ्रातरः प्रव्रज्यासङ्कीर्तनाद्वियोगाशङ्कात्यथितमनसः शोकाश्रु-दुर्दिनमुखाः प्रणम्यैनमूचुः । नार्हत्यत्रभवान्पितृवियोगशोकशल्यव्रणम-मसंरूढमेव नो घट्टयितुमपरेण दुःखाभिनिपातक्षारेण ।

शोकाश्रुभिर्दुर्दिनानि आर्द्राणि मुखानि येषां ते । असंरूढं अपूरितमेव । घट्टयितुं पीडयितुम् ।

अद्यापि तावत्पितृशोकशल्यक्षतानि रोहन्ति न नो मनांसि ।
तत्साध्विमां संहर धीर बुद्धिं मा नः क्षते क्षारमिवोपहार्षीः ॥५॥

तत्साध्विमां संहर धीर बुद्धिं मा नः क्षते क्षारमिवोपहार्षीः ॥५॥

अद्यापीति । पितृशोकशल्यक्षतानि नो मनांसि अद्यापि तावत् न रोहन्ति,

हे धीर ! तदिमां बुद्धिं साधु संहर, नः क्षते क्षारमिव मा उपहार्षीः इत्यन्वयः ।

पितृशोकः पितृमरणजन्यं दुःखं तदेव शल्यं कंटकः तेन क्षतानि उपहतानि नोऽस्माकं मनांसि अद्याऽपि तावत् न रोहन्ति न सम्यक् प्रसीदन्ति, हे धीर ! तत्तस्मादिमां प्रव्रज्याव्यवसायोन्मुखीं बुद्धिं साधु संहर निवर्तय, नः क्षते क्षारं लवणमिव मा उपहार्षीः मा प्रयच्छेः ॥५॥

अथाक्षमं वेत्सि गृहानुरागं श्रेयःपथं वा वनवाससौख्यम् ।
अस्माननाथानपहाय गेहे कस्माद्वनं वाञ्छसि गन्तुमेकः ॥ ६ ॥

अथेति । अथ गृहानुरागं अक्षमं वेत्सि, वनवाससौख्यं वा श्रेयःपथं (वेत्सि) (तर्हि) गेहे अनाथान् अस्मानपहाय एकः वनं गन्तुं कस्मात् वाञ्छसि इत्यन्वयः ।

अयं भावः—यदि गृहानुरागं संत्यज्य वनवास एव कल्याणं मन्यसे तर्हि सर्वानस्मान् संत्यज्य एकलस्यैव ते वनगमनं तावदनुचितं खलु ॥ ६ ॥

तद्यात्रभवतो गतिः सास्माकम् । वयमपि प्रव्रजाम इति बोधिसत्त्व उवाच—

अनभ्यासाद्विवेकस्य कामरागानुवर्तिनः ।
प्रपातमिव मन्यन्ते प्रव्रज्यां प्रायशो जनाः ॥ ७ ॥

अनभ्यासादिति । विवेकस्य अनभ्यासात् कामरागानुवर्तिनो जनाः प्रायशः प्रव्रज्यां प्रपातमिव मन्यन्ते इत्यन्वयः ।

विवेकस्य नित्याऽनित्यवस्तुज्ञानस्य अनभ्यासात् अमननात् कामोऽभिलाषः, रागो विषयेष्वासक्तिस्तयोरनुवर्तिनो जनाः मनुष्याः प्रायशो बाहुल्येन प्रव्रज्यां सन्यासं प्रपातमिव गतानुगतिकतयाऽनुष्ठेयं साधारणं कार्यमिव मन्यन्ते ॥ ७ ॥

इति मया निगह्य नाभिहिताः स्थ प्रव्रज्याश्रयं प्रति जानतापि गृहवनवासविशेषम् । तदेतच्चेदभिरुचितं भवतामेव प्रव्रजाम इति । ते सप्तापि भ्रातरो भगिन्यष्टमाः स्फीतं गृहविभवसारमश्रुमुखं च मित्रस्वजनबन्धुवर्गं विहाय तापसप्रव्रज्यया प्रव्रजिताः तदनुरक्तहृदयश्चैनान्सहाय एको दासी दासश्चानुप्रव्रजिताः । तेऽन्यतरस्मिन्महत्यरण्यायतने ज्वलितमिव विकसितकमलवनशोभया विहसदिव च फुल्लकुमुदवनैरनिभृतमधुकरगणममलनीलसलिलं महत्सरः संनिश्रित्य प्रविविक्तमनोज्ञासु च्छायाद्रुमसमुपगूढास्वसंनिकृष्टविनिविष्टासु पृथक्पृथक्पर्णशालासु व्रतनियमपराः

ध्यानानुयुक्तमनसो विजह्रुः । पञ्चमे पञ्चमे दिवसे बोधिसत्त्वसमीपं धर्मश्रवणार्थमुपजग्मुः । स चैषां ध्यानोपदेशप्रवृत्तां कामादीनवदर्शनीं संवेजनीयां प्रविवेकसन्तोषवर्णबहुलां कुहनलपनकौसीद्यादिदोषविगर्हणीमुपशमप्रसादपद्धतिं तां तां धर्म्यां कथां चकार । सा चैनान्दासी बहुमानानुरागवशा अथैव परिचचार । सा तस्मात्सरसो बिसान्युद्धृत्य महत्सु पद्मिनीपर्णेषु शुचौ तीरप्रदेशे समान्विन्यस्य च भागान्काष्ठसंघट्टनशब्देन कालं निवेद्यापक्रामति स्म । ततस्तेषामृषीणां कृतजपहोमविधीनां यथावृद्धमेकैकोऽभिगम्य ततो बिसभागमेकैकं यथाक्रममादाय स्वस्यां स्वस्यां पर्णशालायां विधिवत्परिभुज्य ध्यानाभियुक्तमतिर्विजहार । त एवं प्रवृत्तानैव परस्परं ददृशुरन्यत्र धर्मश्रवणकालात् । तेषामेवंविधेन निरवद्येन शीलवृत्तसमुदाचारेण प्रविवेकाभिरत्या ध्यानप्रवणमानसतया च सर्वत्र यशः समुपश्रुत्य शक्रो देवानामिन्द्रस्तत्परीक्षानिमित्तं तत्राभिजगाम । तच्चैषां ध्यानाभिमुखत्वं कुकार्येष्वप्रसङ्गमनुत्कण्ठां प्रशमाभिरामं चावस्थानमवेक्ष्य स्थिरतरगुणसम्भावनस्तत्परीक्षानिमित्तमवहितमना बभूव ।

इति हेतोर्मया निगृह्य अनुरुध्य नाऽभिहिताः स्थ नाऽऽज्ञापिताः स्थ । विशेषं भेदम् । भगिनी अष्टमी येषां ते भगिन्यष्टमाः । ज्वलितमिव प्रज्वलमानमिव । अनिभृतश्चञ्चलो मधुकरगणो भ्रमरसमूहो यत्र तत् । प्रविविक्तं रहोभूमिस्तया मनोज्ञासु । छायायुक्ता द्रुमाश्छायाद्रुमास्तैः समुपगूढासु आच्छन्नासु । असंनिकृष्टे नाऽतिसमीपे विनिविष्टासु रचितासु । पर्णशालासु उटजेषु । पञ्चमे पञ्चमे इति प्रतिपञ्चमदिवसमित्यर्थः । कामो विषयाभिलाष एव आदीनवः क्लेशस्तं दर्शयतीति तादृशीम् । संवेजनीयां ज्ञानरूपाम् । प्रकृष्टो विवेकः प्रविवेकः संतोषवर्णाः सान्त्वनोपयुक्ताः शब्दाः बहवो यस्यां सा ताम् । कुहना कपटः, लपनं, गापनं कौसीद्यं अविहितवृद्धिद्रव्यग्रहणम् । परिचचार असेवत । बिसानि कमलनालानि । काष्ठसंघट्टनशब्देन काष्ठताडनशब्देन । कालं आहारसमयम् । यथावृद्धं ज्येष्ठादिक्रमेण । निरवद्येन निर्मलेन । समुदाचारः आचरणम् अप्रसङ्गमनासक्तिम् अवस्थानं स्थितिम् । स्थिरतरा दृढतरा गुणेषु तेषां सम्भावना आदरो यस्य सः ।

अनुत्सुको वनान्तेषु वसञ्छमपरायणः ।
आरोपयति साधूनां गुणसम्भावनां हृदि ॥ ८ ॥

अनुत्सुक इति । अनुत्सुकः शमपरायणो वनान्तेषु वसन् ( जनः ) साधूनां हृदि गुणसम्भावनां आरोपयति इत्यन्वयः ।

अयं भावः—विषयपराङ्मुखः शमैकपरो वनवासी जनो महात्मनामपि हृदि स्वविषये सादरां धियं जनयति ॥ ८ ॥

अथ द्विपकलभदशनपाण्डुकोमलानि समुद्धृत्य प्रक्षाल्य च बिसानि मरकतहरितप्रभेषु पद्मिनीपत्रेषु कमलदलकेशरोपहारालंकृतान्विरचय्य समान्भागान्काष्टसंघट्टनशब्देन निवेद्य कालं तेषामृषीणामपसृतायां तस्यां दास्थां बोधिसत्त्वपरीक्षार्थं शक्रो देवानामिन्द्रः प्रथममेव बिसभागमन्तर्धापयामास ।

द्विपकलभः करिशावकः । 'कलभः करिशावकः' इति कोषात् । तस्य दशनवत् दन्ताङ्कुरवत् पाण्डूनि धवलानि कोमलानि च । कमलदलानां कमलकोषाणां केशराः किंजल्काः एव उपहारा मण्डनानि तैरलंकृतान् । प्रथममिति बोधिसत्त्वस्यांशमिति यावत् । अन्तर्धापयामास तिरश्चकार ।

प्रवर्तने हि दुःखस्य तिरस्कारे सुखस्य च ।
धैर्यप्रयामः साधूनां विस्फुरन्निव गृह्यते ॥ ९ ॥

प्रवर्तन इति । हि दुःखस्य प्रवर्तने सुखस्य च तिरस्कारे साधूनां धैर्यप्रयामः विस्फुरन्निव गृह्यते इत्यन्वयः ।

एतत् तात्पर्यम्—सुखाऽभिभवपूर्वकं दुःखोद्रेके सत्येव महात्मनां गूढं तेजः पुरः स्फुरति ॥ ९ ॥

अथ बोधिसत्त्वोऽभिगतः प्रथमे बिसभागस्थाने बिसभागविरहितं पद्मिनीपत्रं परिव्याकुलीकृतोपहारमभिसमीक्ष्य गृहीतः केनापि मे बिसप्रत्यंश इत्यवधृतमतिरपेतचेतःसंक्षोभसरम्भस्तत एव प्रतिनिवृत्य प्रविश्य पर्णशालायां यथोचितं ध्यानविधिमारेभे । वैमनस्यपरिहारार्थं चेतरेषामृषीणां तमर्थं न निवेदयामास । इतरे त्वस्य भ्रातरो नूनमनेन गृहीतः प्रत्यंश इति मन्यमाना यथोचितानेव स्वान्स्वाननुक्रमेण बिसभागाना-

दाय यथार्हं पर्णशालासु परिभुज्य ध्यायन्ति स्म । एवं द्वितीये तृतीये चतुर्थे पञ्चमे च दिवसे शक्रस्तस्य तं बिसप्रत्यंशमुपनिदधे । बोधिसत्त्वोऽपि च महासत्त्वस्तथैव निःसंक्षोभप्रशान्तचित्तो बभूव ।

परिव्याकुलीकृतोऽपहृतः उपहारो भक्ष्यं यस्मात् तत् । संक्षोभसंरम्भः चाञ्चल्यावेगः । वैमनस्यमवमानजन्यो विरोधः । उपनिदधे अमुष्णात् ।

मनःसंक्षोभ एवेष्टो मृत्युर्नायुःक्षयः सताम् ।
जीवितार्थेऽपि नाऽऽयान्ति मनःक्षोभमतो बुधाः ॥१०॥

मनःसंक्षोभ इति । सतां ( किल ) मनःसंक्षोभ एव मृत्युरिष्टः आयुःक्षयस्तु न, ( अतः ) बुधाः जीवितार्थेऽपि मनःसंक्षोभं नाऽऽयान्ति इत्यन्वयः ।

अयं भावः—साधवो योगपरा मनःसंक्षोभमेव मरणं मन्यन्ते, अतो जीवितमर्थेऽपि ते मनःक्षोभमविधाय स्थिरा एवाऽवतिष्ठन्त इति ॥१०॥

अथापराह्णसमये धर्मश्रवणार्थमृषयस्ते यथोचितं बोधिसत्त्वस्य पर्णशालां समभिगता ददृशुस्चैनं कृशतरशरीरं परिक्षामकपोलनयनं परिम्लानवदनशोभमसम्पूर्णस्वरगाम्भीर्यं परिक्षीणमप्यपरिक्षीणधैर्यप्रशमगुणमभिनवेन्दुप्रियदर्शनमुपेत्योपचारपुरःसरं ससम्भ्रमाः किमिदमिति कार्श्यनिमित्तमेनमपृच्छन् । तेभ्यो बोधिसत्त्वस्तमर्थं यथानुभूतं निवेदयामास । अथ ते तापसाः परस्परमीदृशमनाचारमसम्भावयन्तस्तत्पोडया च समुपजातसंवेगाः कष्टं कष्टमित्युक्त्वा व्रीडावनतवदनाः समतिष्ठन्त शक्रप्रभावाच्च समावृतध्यानगतिविषयाः कुत इदमिति न निश्चयमुपजग्मुः । अथ बोधिसत्त्वस्यानुजो भ्राता स्वभावेगमात्मविशुद्धिं च प्रदर्शयञ्छपथातिशयमिमं चकार ।

ददृश्वांसो द्रष्टारः । परिक्षामौ कार्श्यंकलितौ कपोलौ नयने च यस्य तम् । समुपजातसंवेगाः सञ्जातदुःखाः । शपथातिशयं कठोरं शपथम् ।

समृद्धिचिह्नाभरणं स गेहं प्राप्नोतु भार्यां च मनोऽभिरामाम् ।
समग्रतामेतु च पुत्रपौत्रैर्बिसानि ते ब्राह्मण यो ह्यहार्षीत् ॥११॥

समृद्धिचिह्नेति । हे ब्राह्मण ! यस्ते बिसान्यहार्षीत्, स हि समृद्धिचिह्नाभरणं गेहं, मनोऽभिरामां भार्यां च प्राप्नोतु, पुत्रपौत्रैश्च समग्रतामेतु इत्यन्वयः ।

अयं भावः—अस्मासु येन वा प्रव्रज्यां गृहीतवताऽपि जनेन भवद्बिसाहरणं कृतं भवेत्, असौ पुत्रकलत्रसम्पन्नं सश्रीकं गृहमनुप्रविश्य नन्दतु इति, एवमग्रेऽपि आत्मानमुद्दिश्योक्तिः ॥ ११ ॥

अपर उवाच—

माला: स्रजश्चन्दनमंशुकानि बिभ्रद्विभूषाश्च सुताभिमृष्टाः ।
कामेषु तीव्रां स करोत्वपेक्षां बिसान्यहार्षीद्द्विजमुख्य ! यस्ते ॥१२॥

अपरो द्वितीयः । माला इति । हे द्विजमुख्य ! यस्ते बिसान्यहार्षीत्, सः मालाः, स्रजः, चन्दनं, अंशुकानि, सुताभिमृष्टाः विभूषाश्च बिभ्रत् तीव्रेषु कामेषु अपेक्षां करोतु इत्यन्वयः ।

हे द्विजमुख्य ! ब्राह्मणवर ! यस्ते बिसान्यहार्षीत् जहार स जनः मालाः हारान्, स्रजः पुष्पदामानि, चन्दनमनुलेपनं, अंशुकानि रुचिराणि वासांसि, सुतैः पुत्रैरभिमृष्टाः करैः स्पृष्टाः विभूषा आभरणानि च बिभ्रत् धारयन्, तीव्रेष्वत्युत्कटेषु कामेषु विषयेषु अपेक्षामासङ्गं करोतु ॥ १२ ॥

अपर उवाच—

कृष्याश्रयावाप्तधनः कुटुम्बी प्रमोदमानस्तनयप्रलापैः ।
वयोऽप्यपश्यन्रमतां स गेहे बिसानि यस्ते सकृदप्यहार्षीत् ॥ १३ ॥

अपरस्तृतीयः । कृष्याश्रयावाप्तेति । यस्ते बिसानि सकृदपि अहार्षीत्, सः कृष्याश्रयावाप्तधनः कुटुम्बी तनयप्रलापैः प्रमोदमानः, वयोऽप्यपश्यन् गेहे रमतामित्यन्वयः ।

अयं भावः—यस्ते मृणालानि एकदाऽपि जहार, असौ कृषिसम्पन्नो महापरिवारः पुत्रपौत्रैः समेतः प्रव्रज्योचितमपि स्वं वयो विस्मरन् गेहे मोदतामिति ॥१३॥

अपर उवाच—

नराधिपैर्भृत्यविनीतचेष्टैरभ्यर्च्यमानो नतलोलचूडैः ।
कृत्स्नां महीं पातु स राजवृत्त्या लोभादहार्षीत्तव यो बिसानि ॥१४॥

अपरश्चतुर्थः । नराधिपैरिति । यो लोभात्तव बिसान्यहार्षीत्, सः भृत्यविनीतचेष्टैर्नतलोलचूडैर्नराधिपैरभ्यर्च्यमानो राजवृत्त्या कृत्स्नां महीं पातु इत्यन्वयः ।

यो मादृशो जनो लोभात्तव ते बिसानि अहार्षीत् जग्राह, सः भृत्यवत् परिजन-वत् विनीता नम्रा चेष्टा आचरणं येषां तैर्भृत्यायमाणैरित्यर्थः नतलोक चूडैर्नामितमौलिदेशैर्नराधिपैरभ्यर्च्यमानः ससेवितः सन् राजवृत्त्या राजधर्मानुसारेण कृत्स्नां महीं पातु, चक्रवर्तिपदमवाप्य नन्दतु इति भावः ॥१४॥

अपर उवाच—

पुरोहितः सोऽस्तु नराधिपस्य मन्त्रादिना स्वस्त्ययनेन युक्तः ।
सत्कारमाप्नोतु तथा च राज्ञस्तवापि यो नाम बिसान्यहार्षीत् ॥१५॥

अपरः पञ्चमः । पुरोहित इति । यो नाम तवाऽपि बिसान्यहार्षीत्, सः मन्त्रादिना स्वस्त्ययनेन युक्तो नराधिपस्य पुरोहितोऽस्तु तथा च राज्ञः सत्कार-माप्नोतु इत्यन्वयः ।

अयं भावः—यः खल्वसम्भाव्यं त्वदीयबिसहरणं व्यधात्, असौ वटुर्मन्त्रादि-स्वस्त्ययनै राजपुरोहितकर्म साधु सम्पादयन् राज्ञो नानाविधं सत्कारमधिगच्छतु ॥१५॥

अपर उवाच—

अध्यापकं सम्यगधीतवेदं तपस्विसम्भावनया महत्या ।
अर्चन्तु तं जानपदाः समेत्य बिसेषु लुब्धो न गुणेषु यस्ते ॥१६॥

अपरः षष्ठः । अध्यापकमिति । यस्ते बिसेषु लुब्धो (ऽभूत्) गुणेषु न (लुब्धोऽभूत्) तं सम्यगधीतवेदं अध्यापकं महत्या तपस्विसम्भावनया समेत्य जानपदा अर्चन्तु इत्यन्वयः ।

अयं भावः—यस्ते बिसग्रहणलुब्धः स्तेयं चकार, त्वद्गुणमहिमानं च नाऽऽकलयाञ्चकार, तं वेदविदं प्रवक्तारं सर्वेऽपि जनपदवासिनो गुणमहिम्नाऽऽकृष्टाः सन्तो धन-धान्यादिभिरर्चयन्तु इति ॥१६॥

सहाय उवाच—

चतुःशतं ग्रामवरं समृद्धं लब्ध्वा नरेन्द्रादुपयातु भोक्तुम् ।
अवीतरागो मरणं स चैतु लोभं बिसेष्वप्यजयन्न यस्ते ॥१७॥

सहायः सहायकोऽपरः परिजन इति यावत् ।

चतुःशतमिति । यस्ते बिसेष्वपि लोभं न अजयत्, सः नरेन्द्रात् समृद्धं चतुःशतं ग्रामवरं लब्ध्वा भोक्तुमुपयातु, अवीतरागो मरणं च एतु इत्यन्वयः ।

यस्ते बिसेष्वपि बिसतुल्ये वस्तुन्यपि लोभं न अजयत् लोभसंवरणं कर्तुं नाऽशकत्, सः नरेन्द्रात् भूपालात् समृद्धं समृद्धिशालि चतुःशतं तत्संख्याकं ग्रामवरं ग्रामलाभरूपं वरं लब्ध्वा, भोक्तुमुपयातु यथेप्सितं भोगं तनुतां, अवीतरागो विषयासक्त एव च मरणं एतु प्राप्नोतु ॥१७॥

दास उवाच—

स ग्रामणीरस्तु सहायमध्ये स्त्रीनृत्तगीतैरुपलाप्यमानः।
मा राजतश्च व्यसनानि लब्ध बिसार्थमात्मार्थमशीशमद्यः ॥१८॥

दासः सेवकः। स इति। यो बिसार्थं आत्मार्थं अशीशमत्, सः स्त्री-नृत्त-गीतैरुपलाप्यमानः सहायमध्ये ग्रामणीरस्तु, राजतश्च व्यसनानि मा लब्ध इत्यन्वयः।

यो बिसार्थं आत्मार्थं आत्मनः सत्यमपि अशीशमत् अनाशयत, सः स्त्रीभिरङ्गनाभिः नृत्तैर्लास्यविशेषैः गीतैश्च उपलाप्यमानः सेव्यमानः सन् सहायमध्ये सकलपरिचारकसमूहे ग्रामणीः प्रथमोऽग्रसरो वा अस्तु भवतात्, राजतो राज्ञः सकाशात् च व्यसनानि आपदो मा लब्ध न प्राप्नोतु इति ॥१८॥

भगिन्युवाच—

विद्योतमानां वपुषा श्रिया च पत्नीत्वमानीय नराधिपस्ताम्।
योषित्सहस्राग्रसरीं करोतु यास्त्वाद्विधस्यापि बिसान्यहार्षीत् ॥१९॥

भगिनी स्वसा। विद्योतमानामिति। या त्वद्विधस्याऽपि बिसानि अहार्षीत्, वपुषा श्रिया च विद्योतमानां तां नराधिपः पत्नीत्वमानीय योषित्सहस्राग्रसरीं करोतु इत्यन्वयः।

या स्त्री त्वद्विधस्याऽपि त्वादृशस्याऽपि महात्मनो बिसान्यहार्षीत्, वपुषा शरीरसम्पदा श्रिया समृद्ध्या च विद्योतमानां रमणीयां तां नारीं नराधिपो राजा पत्नीत्वमानीय निजपत्नीत्वेन स्वीकृत्य योषितां यत् सहस्रं समुदायस्तस्य अग्रसरीं प्रधानीभूतां पट्टमहिषीमिति यावत्। करोतु विधत्ताम् ॥ १९ ॥

दास्युवाच—

एकाकिनी सा समतीत्य साधून्स्वादूपभोगे प्रणयं करोतु।
सत्कारलब्धां मुदमुद्वहन्ती बिसान्यपश्यत्तव या न धर्मम् ॥२०॥

एकाकिनीति । या तव विसान्यपश्यत् धर्मं तु न (अपश्यत्) एकाकिनी सा साधून् समतीत्य सत्कारलब्धां मुदमुद्वहन्ती स्वादूपभोगे प्रणयं करोतु इत्यन्वयः ।

या दासी तव विसानि लोभव्याकुला सती अपश्यत्, धर्मं स्तेयजनितं धर्मव्यतिक्रमं तु न अपश्यत्, एकाकिनी एकला सा साधून् मर्यादावान् महापुरुषान् समतीत्य त्यक्त्वा कुत्रचित् सत्कारेणाऽऽदरेण लब्धां मुदं प्रीतिमुद्वहन्ती स्वादूनां पदार्थानां उपभोगे आस्वादने प्रणयं करोतु तत्परा भवतु ॥२०॥

अथ तत्र धर्मश्रवणार्थं समागतास्तद्वनाध्युषिता यक्ष-द्विरद-वानरास्तां कथामुपश्रुत्य परां व्रीडां संवेगं चोपजग्मुः । अथ यक्ष आत्मविशुद्धिप्रदर्शनार्थमिति शपथमेषां पुरतश्चकार ।

वनाध्युषिताः वनस्थिताः । व्रीडां लज्जां, संवेगं सम्भ्रमम् ।

आवासिकः सोऽस्तु महाविहारे कचङ्गलायां नवकर्मिकश्च ।
आलोकसन्धिं दिवसैः करोतु यस्त्वय्यपि प्रस्खलितो विसार्थम् ॥२१॥

आवासिक इति । यस्त्वयि अपि विसार्थे प्रस्खलितोऽभूत् सः महाविहारे आवासिकः अस्तु, कचङ्गलायां नवकर्मिकश्च (वा) अस्तु, (अथवा) दिवसैरालोकसन्धिं करोतु इत्यन्वयः ।

यो मादृशो यक्षः त्वयि गुणिवरे महात्मनि अपि विसार्थे विसलोभेन प्रस्खलितः सत्यात् च्युतोऽभूत्, सः महाविहारे महामठे आवासिकः कृतावासोऽस्तु भिक्षुर्भवतु (यक्षाणां भोगप्रियत्वात्तेषामेष दण्ड एवेति भावः) अथवा कचङ्गलायां राजकरराहिते कस्मिंश्चित् विपणिस्थले नवकर्मिको भारवाहको वाऽस्तु, (राजकरराहित्येन महाभारधारणप्रसङ्गात्) अथवा दिवसैर्दिनसमये आलोकसन्धिं स्वजीविकार्थमितस्ततो भ्रमणं करोतु, (तेषां रात्रिभ्रमणशक्तत्वात् दिवाभ्रमणे पीडा स्यादिति भावः) ॥२१॥

हस्त्युवाच—

षड्भिर्दृढैः पाशशतैः स बन्धं प्राप्नोतु रम्याच्च वनाज्जनान्तम् ।
तीक्ष्णाङ्कुशाकर्षणजां रुजञ्च यस्ते मुनिश्रेष्ठ ! विसान्यहार्षीत् ॥२२॥

षड्भिरिति । हे मुनिश्रेष्ठ ! यस्ते विसान्यहार्षीत्, सः रम्यात् वनात् जनान्तं प्राप्नोतु, षड्भिर्दृढैः पाशशतैश्च बन्धं तीक्ष्णाङ्कुशाकर्षणजां रुजञ्च प्राप्नोतु इत्यन्वयः ।

हे मुनिश्रेष्ठ ! यतिवर ! यस्ते बिसान्यहार्षीत्, स मद्विधो गजः रम्यात् रमणीयात् वनात् काननप्रदेशात् जनैरावद्धश्च नीतो जनान्तं जनपदं प्राप्नोतु, षड्भिर्दृढैः सान्द्रैः पाशशतैः पाशशतकैः च बन्धं बन्धनं, ततः तीक्ष्णं शीतं यदङ्कुशं तेन यदाकर्षणमापीडनं तज्जाः रुजो व्यथाश्च प्राप्नोतु ॥२२॥

वानर उवाच—

स पुष्पमाली त्रपुघृष्टकण्ठो यष्ट्या हतः सर्पमुखं परैतु ।
वैकक्ष्यबद्धश्च वसेद्गृहेषु लौल्याद्दहार्षीत्तव यो बिसानि ॥२३॥

वानरो मर्कटः । स इति । यो लौल्यात्तव बिसान्यहार्षीत्, सः पुष्पमाली त्रपुघृष्टकण्ठः यष्ट्या हतः सर्पमुखं परैतु ( अथवा ) वैकक्ष्यबद्धश्च गृहेषु वसेत् इत्यन्वयः ।

यो मज्जातीयो वानरो लौल्यात् चञ्चलतया तव बिसान्यहार्षीत् सः जनैर्बद्धः सकुतूहलं पुष्पमाली कृतः पुष्पमालयाऽलङ्कृतः त्रपुणा त्रापुषेण शृङ्खलाबन्धनेन घृष्टः जातकिणः कण्ठो यस्य सः, यष्ट्या हतश्चापलये ताड्यमानः सन् गृहे सर्पमुखं परैतु गृहसर्पदष्टो म्रियताम्, अथवा वैकक्ष्येण शृङ्खलाविशेषेण बद्धो निगडितः संश्च गृहेषु वसेत् वसत्विति भावः ॥२३॥

अथ बोधिसत्त्वस्तान्सर्वानेवानुनयविनीताक्षरं शान्तिगाम्भीर्यसूचक-मित्युवाच—

अनुनयेन प्रार्थनया विनीतानि सौम्यान्यक्षराणि यस्मिन् कर्मणि यथा स्यात्तथा ।

यो नष्टमित्याह न चास्य नष्टमिष्टान्स कामानधिगम्य कामम् ।
उपैतु गेहाश्रित एव मृत्युं भवत्सु यः शङ्कत ईदृशं वा ॥२४॥

य इति । यो नष्टं इत्याह, अस्य च ( किमपि ) न नष्टं, भवत्सु वा य इदृशं शङ्कते, सः कामं इष्टान् कामानधिगम्य, गेहाश्रित एव मृत्युं उपैतु इत्यन्वयः ।

यो मद्विधो जनः यदि नष्टमित्याह, 'मदीयो बिसभागो नष्टः' इति यदि वदेत्, अस्य ( मे ) किमपि नैव नष्टं, बिसभागनाशस्याऽकिञ्चित्करत्वात्, भवत्सु वा य ईदृशं बिसभागाहरणं शङ्कते, सः ( मद्विधो जनः ) कामं पर्याप्तं इष्टान् कामान् विषयोपभोगानधिगम्य, गेहाश्रितो गृहस्थ एव मृत्युमुपैत्वधिगच्छतु ॥२४॥

अथ शक्रो देवेन्द्रस्तेन तेषां कामोपभोगप्रातिकूल्यसूचकेन शपथाति-

श्येन ऽप्युत्पादितविस्मयबहुमानः स्वेनैव वपुषाभिज्वलता तानृषीनभि-गम्य सामर्षवदुवाच—मा तावद्भोः !

देवेन्द्रः सुरप्रधानः शक्र इत्यन्वयः । वपुषा उपलक्षित इति शेषः ।

यत्प्राप्तिपर्युत्सुकमानसानां सुखार्थिनां नैति मनांसि निद्रा ।
यान्प्राप्तुमिच्छन्ति तपःश्रमैश्च शब्केन कामानिति कुत्सयध्वे ॥२५॥

यदिति । यत्प्राप्तिपर्युत्सुकमानसानां सुखार्थिनां ( वः ) मनांसि निद्रा नैति, तपःश्रमैश्च ( भवन्तः ) यत्प्राप्तुमिच्छन्ति, तान् कामान् इति केन कुत्सयध्वे ? इत्यन्वयः ।

अयं भावः—यत्किञ्चिदनुत्तमसुखाधिगमफलक एवाऽयं भवतां तपसि अभियोगः, अतः कुतः कामानां निन्दा विधीयते ? इति ॥ २५ ॥

बोधिसत्त्व उवाच—अनन्तादीनवा मार्ष ! कामाः । संक्षेपतस्तु श्रूयतां यदभिसमीक्ष्य कामान्न प्रशंसन्ति मुनयः ।

हे मार्ष ! साधो ! अनन्ता असीमा असीमा आदीनवाः क्लेशाः येषु ते तादृशाः कामाः भवन्ति ।

कामेषु बन्धमुपयाति वधं च लोकः
शोकं क्लमं भयमनेकविधं च दुःखम् ।
कामार्थमेव च महीपतयः पतन्ति
धर्मोपमर्दरभसा नरकं परत्र ॥ २६ ॥

कामेष्विति । लोकः कामेषु बन्धं वधं च शोकं क्लमं अनेकविधं भयं दुःखं च उपयाति, कामार्थमेव च महीपतये धर्मोपमर्दरभसा परत्र नरकं पतन्ति इत्यन्वयः ।

लोकः जनः कामेषु विषयाऽभिलाषेषु तैस्तैः कारणैः बन्धं राजदण्डरूपं, वधं मरणं, च, शोकमनुतापं, क्लमं श्रमं, अनेकविधं बहुप्रकारं भयं दुःखं च उपयाति, प्राप्नोति, कामार्थमेव विषयाऽभिलाषाऽतिशयेनैव च महीपतयो राजानोऽपि धर्मस्य सदाचारस्य य उपमर्दः उल्लङ्घनं तत्र रभसा अविवेकेन परत्र, देहात्यागादूर्ध्वं नरकं स्वदुरितपरिणामात्मकं पतन्ति प्रविशन्ति इति ॥ २६ ॥

यत्सौहृदानि सहसा विरसीभवन्ति
यन्नीतिशाठ्यमलिनेन पथा प्रयान्ति ।

कीर्त्या वियोगमसुखैः परतश्च योगं
यत्प्राप्नुवन्ति ननु कारणमत्र कामाः ॥ २७ ॥

यदिति । यत् ( जनानां ) सौहृदानि सहसा विरसीभवन्ति, यत् ( जनाः ) नीतिशाठ्यमलिनेन पथा प्रयान्ति, यच्च कीर्त्या वियोगं, परतः असुखैर्योगं च प्राप्नुवन्ति ननु अत्र कामाः ( एव ) कारणमित्यन्वयः ।

यत् यस्मात् हेतोः 'यत्तद् यतस्ततो हेतौ' इत्यमरः । जनानां सौहृदानि सुहृद्भावाः सहसा अकाण्ड एव विरसीभवन्ति, मलिनीभवन्ति, यत् यतो जनाः नीतिर्नयस्तेन यत् शाठ्यं कपटं तन्मलिनेन पथा प्रयान्ति, कपटप्रायमाचरन्ति, यच्च यतश्च कीर्त्या वियोगं नीतिवैषम्ये अकीर्तिं, परतः परलोके असुखैर्नरकत्रासादिभिर्योगं सम्बन्धं च प्राप्नुवन्ति, तत्र सर्वत्र ननु निश्चयेन कामाः उत्कटाः विषयाऽभिलाषा एव कारणं हेतवो भवन्तीति शेषः ॥२७॥

इति हीनविमध्यमोत्तमानामिह चामुत्र च यद्वधाय कामाः ।
कुपितान्भुजगानिवात्मकामा मुनयस्तानिति शक्र नाश्रयन्ते ॥२८॥

इतीति । इति हीनविमध्योत्तमानां इहाऽमुत्र च कामाः यत् वधाय ( भवन्ति ) ( अत ) हे शक्र ! आत्मकामा मुनयः कुपितान् भुजगानिव इति तान् नाऽऽश्रयन्ते इत्यन्वयः ।

इत्येवं पूर्वोक्तया रीत्या हीनविमध्यमोत्तमानां अवम-मध्यम-उत्तमानां त्रिविधानामपि पुरुषाणां इह अमुत्र च अस्मिंल्लोके परलोके च कामाः यत् यस्मात् वधाय नाशाय भवन्ति, अतः हे शक्र ! देवेन्द्र ! आत्मानं एव कामयन्त इत्यात्मकामाः समदर्शिनो मुनयः कुपितान् क्षुब्धान् भुजगान् सर्पानिव इति हेतोस्तान् नाऽऽश्रयन्ते नाऽभिलषन्ति । वियोगिनी वृत्तम् ॥२८॥

अथ शक्रो देवानामिन्द्रस्तस्य तद्वचनं युक्तमित्यभिनन्द्य तेन चैतेषामृषीणां माहात्म्येनाभिप्रसादितमनास्तेभ्यः स्वमपराधमाविश्चकार ।

गुणसम्भावनाव्यक्तिर्यत्परीक्ष्योपलभ्यते ।
मया विनिहतान्यस्मात्परीक्षार्थं बिसानि वः ॥२९॥
तत्सनाथं जगद्दिष्ट्या मुनिभिस्तथ्यकीर्तिभिः ।
विशुद्धिः स्थिरचारित्रे तदेतानि बिसानि ते ॥३०॥

गुणसम्भावनेति । तत्सनाथमिति च । यत्-गुणसम्भावनाव्यक्तिः परीक्षय उपलभ्यते, अस्मात्-परीक्षार्थं मया वः बिसानि विनिहितानि । तद् दिष्ट्या तथ्यकीर्तिभिः मुनिभिः जगत् सनाथं ( अस्ति ), तदेतानि बिसानि ते स्थिरचारित्रे विशुद्धिः ( अस्ति ) इत्यन्वयः ।

उभयोरयं भावः—परीक्षया विना गुणज्ञानं न भवतीति मया तव बिसान्यपहृतानि, दिष्ट्या च भवदीयाऽनुपमगुणवत्ताज्ञानं मया दृष्टः, सफलश्च भवता संसारः, बिसानि चैतानि तव चारित्र्यप्रमाणभूतानि तिष्ठन्तीति ॥२९-३०॥

इत्युक्त्वा तानि बिसानि बोधिसत्त्वस्य समुपजहार । अथ बोधिसत्त्वस्तदस्यासमुदाचारधाष्ट्र्यं तेजस्विनिभृतेन वचसा प्रत्यादिदेश ।

समुपजहार प्रत्यर्पयामास । असमुदाचारधाष्ट्र्यं असदाचाररूपां धृष्टताम् । निभृतेन योग्येन ।

न बान्धवा नैव वयं सहाया न ते नटा नापि विडम्बकाः स्मः ।
कस्मिन्नवष्टभ्य नु देवराज ! क्रीडापथेनैवमृषीनुपैषि ॥३१॥

न बान्धवा इति । हे देवराज ! वयं ते न बान्धवा नैव सहायाः, न नटाः, नाऽपि विडम्बकाः स्मः, कस्मिन्नु अवष्टभ्य एवं क्रीडापथेन ऋषीन् उपैषि ? इत्यन्वयः ।

हे देवराज ! इन्द्र ! वयं मुनयः ते तव न बान्धवाः न दायादाः, नैव सहाया अनुचराः, न नटाः नर्तकाः, नाऽपि विडम्बकाः उपहासपात्राणि स्मः भवामः, तत् कस्मिन् नु अवष्टभ्य कं सम्बन्धमादाय एव क्रीडापथेन उपहासमार्गेण ऋषीन् अस्मद्विधान् निरीहान् मुनीन् उपैषि आगत्य व्याकुलयसि ? इति सरोषं प्रश्नः ।

इत्युक्ते शक्रो देवेन्द्रः ससम्भ्रमापाश्वकुण्डलकिरीटविद्युद्भासुरवदनः सबहुमानमभिप्रणम्यैनं क्षमयामास ।

कुण्डल किरीटयोर्या विद्युत् विद्युत्सदृशी या कान्तिः ।

उक्तप्रयोजनमिदं चापलं मम निर्मम ।
पितेवाऽऽचार्य इव च क्षन्तुमर्हति तद्भवान् ॥३२॥

उक्तप्रयोजनमिति । हे निर्मम ! मम इदं चापलं उक्तप्रयोजन ( अस्ति ), तत् पितेव आचार्य इव च भवान् क्षन्तुमर्हति इत्यन्वयः ।

निर्मम ममत्वशून्य आत्मदर्शिन् ! । उक्तप्रयोजनं परीक्षार्थमित्यादिनेति भावः । स्पष्टमन्यत् ॥ ३२ ॥

निमीलितज्ञानविलोचनानां स्वभाव एष स्खलितुं समेऽपि ।
क्षमां च तत्राऽऽत्मवतां प्रपत्तुमतोऽप्यदश्चेतसि मा स्म कार्षीः ॥३३॥

निमीलितेति । निमीलितज्ञानविलोचनानां ( पुंसां ) समेऽपि स्खलितु, तत्र आत्मवतां क्षमां च प्रपत्त एष स्वभावः ( अस्ति ), अतोऽपि अदः चेतसि मा स्म कार्षीः इत्यन्वयः ।

इदं तात्पर्यम्—ज्ञानदृष्टिशून्यानां साधारणानां जनानां स्वभाव एवाऽयं यत्—साधौ जने स्खलनं, पश्चात् तद्गुणवत्ताज्ञाने इति क्षमापणमिति मदीयमपराधं क्षमस्वेति ॥ ३३ ॥

इति क्षमयित्वा शक्रस्तत्रैवान्तर्दधे ।

क्षमयित्वा क्षमाप्य । तदेवमिति पूर्वं व्याख्यातम् ।

तदेवं प्राव वेवसुखरसज्ञानां बिडम्बनेव विहिंसेव च कामाः प्रतिकूला भवन्ति ।

तच्चेदं जातकं भगवान्व्याकार्षीत् ।
अहं शारद्वतीपुत्रो मौद्गल्यायनकाश्यपौ ।
पूर्णानिरुद्धावानन्द इत्यासुर्भ्रातरस्तदा ॥३४॥
भगिन्युत्पलावर्णाऽऽसीद्दासी कुब्जोत्तराऽभवत् ।
चित्रो गृहपतिर्दासो यक्षः सातागिरिस्तदा ॥३५॥
पारिलेयोऽभवन्नागो मधुदातैव वानरः ।
कालोदायी च शक्रोऽभूद्धार्यतामिति जातकम् ॥३६॥

इति बिसजातकम् ।

तच्चेदमित्यारभ्य श्लोकत्रयात्मकोऽशः ग्रन्थान्तरोक्तः । व्याकार्षीत् व्याचख्यौ । भगवत्ये कथावस्तुनि सर्वेषां नामानि निर्दिशति—अहमित्यादिना । शारद्वतीपुत्र इति स्वनाम, पञ्चभ्रातॄणां नामानि । एकं भगिन्याः । अपरं दास्याः । चित्रो नाम सहायः । गृहपतिर्नाम दासः, सातागिरिरिति यक्षः । पारिलेयो गजः । मधुदाता वानरः । कालोदायीति शक्रः । इति ॥ ३४-३५-३६ ॥

इति बिसजातकम् ।

## सुतसोमजातकम् ।

श्रेयः समाधत्ते यथातथाऽप्युपनतः सत्सङ्गम इति सज्जनापाश्रयेण श्रेयोऽर्थिना भवितव्यम् । तद्यथानुश्रूयते । बोधिसत्त्वभूतः किलायं भगवान्यशःप्रकाशवंशे गुणपरिग्रहप्रसङ्गात्सात्मीभूतप्रजानुरागे प्रतापानतदृप्तसामन्ते श्रीमति कौरव्यराजकुले जन्म प्रतिलेभे । तस्य गुणशतकिरणमालिनः सोमप्रियदर्शनस्य सुतस्य सुतसोम इत्येवं पिता नाम चक्रे । स शुक्लपक्षचन्द्रमा इव प्रतिदिनमभिवर्धमानकान्तिलावण्यः कालक्रमादवाप्य साङ्गेषु सोपवेदेषु च वेदेषु वैचक्षण्यं दृष्टक्रमः सोत्तरकलानां कलानां लोक्यानां लोकप्रेमबहुमाननिकेतभूतः सम्यगभ्युपपत्तिसौमुख्यादभिवर्धमानादरात्परिपालननियमाच्च बन्धुरिव गुणानां बभूव ।

श्रेय इति । यथा तथा येन केनाऽपि विरोधादिना कारणेन उपनतः संवृत्तः सत्संगमः श्रेयः समाधत्ते, आत्यन्तिकं कल्याणमेव विधत्ते इति हेतोः श्रेयोऽर्थिना स्वकल्याणाऽभिलाषिणा जनेन सज्जनाऽपाश्रयेण सज्जनसङ्गवता भवितव्यमिति योजना । यथाऽस्मिन् जातके बोधिसत्त्वसङ्गात् सौदासस्य स्वभावपरिवर्तनम् । गुणपरिग्रहेति सद्गुणशालितया सात्मीभूतो वशीभूतः प्रजानुरागः यस्य तस्मिन् । कौरव्याः कुरुवंशभवाः ये राजानः क्षत्रियास्तेषां कुले । प्रतिलेभे अलभत । गुणानां शतं समुदाय एव किरणमाला तद्वतः । कान्तिः शरीरप्रभा, लावण्यं रामणीयकं च । दृष्टः अधिगतः क्रमः परम्परा येन सः । कलानामिति सम्बन्धः । लोक्यानां लौकिकीनां, उत्तराः श्रेष्ठाः गायनवादनाद्याः कलास्ताभिः सहितानाम् । अभ्युपपत्तिः परेषामादराऽतिथ्यादि, सौमुख्यं प्रसन्नता ।

शीलश्रुतत्यागदयादमानां तेजःक्षमाधीधृतिसन्नतीनाम् ।
अनुन्नतिह्रीमतिकान्तिकीर्तिदाक्षिण्यमेधाबलशुक्लतानाम् ॥ १ ॥
तेषां च तेषां स गुणोदयानामलङ्कृतानामिव यौवनेन ।
विशुद्धतौदार्यमनोहराणां चन्द्रः कलानामिव संश्रयोऽभूत् ॥ २ ॥

शीलश्रुतेति । तेषां चेति । [ युग्ममेतत् ] शील-श्रुत त्याग-दया-दम-नां तेजः-क्षमा-धी-धृति-संनतीनां, अनुन्नति-ह्री-मति-कान्ति-कीर्ति-दाक्षिण्यमेधाबल-

शुक्लतानां यौवनेन अलंकृतानामिव विशुद्धतौदार्यमनोहराणां तेषां तेषां च गुणो-दयानां कलानां चन्द्र इव सः संश्रयोऽभूत् इत्यन्वयः ।

दमः इन्द्रियनिग्रहः, धीबुद्धिः, संनतिर्नम्रता, अनुन्नतिरहङ्काररहित्यं, मति-र्विवेकेनाऽर्थनिर्धारणं, शुक्लता चारित्र्यनैर्मल्य, इत्यादीनां यौवनेन विभूषितानामिव आचरणनैर्मल्येन उदारहृदयतया च कमनीयानां तेषां तेषां सद्गुणानां कलानां चन्द्र इव स बोधिसत्त्वः आश्रयस्थानमभूदिति भावः ॥ १–२ ॥

अतश्चैनं स राजा लोकपरिपालनसामर्थ्यादक्षुद्रभद्रप्रकृतित्वाच्च यौव-राज्यविभूत्या संयोजयामास ।

यौवराज्यविभूत्या यौवराज्याऽभिषेकेण ।

विद्वत्तया त्वासुरतीव तस्य प्रियाणि धर्म्याणि सुभाषितानि ।
आनर्च पूजातिशयैरतस्तं सुभाषितैरेनमुपागमद्यः ॥ ३ ॥

विद्वत्तयेति । विद्वत्तया तु तस्य धर्म्याणि सुभाषितानि अतीवप्रियाणि आसुः, अतः यः एनं सुभाषितैरुपागमत्, तं पूजातिशयैः आनर्च इत्यन्वयः ।

विद्वत्तया शास्त्रवित्तया तु तस्य युवराजस्य धर्म्याणि धर्म-माहात्म्य-स्वरूप-बोधकानि सुभाषितानि सूक्तानि अतीव प्रियाणि वल्लभानि आसुरभूवन्; अतः यो विद्वान् ब्राह्मणादिः एनं सुभाषितैः स्वेन निर्मितैः सूक्तैरुपागमत् आगत्य श्रावयति स्म, तं विद्वांसं पूजातिशयैः महद्भिः द्रव्यसम्भरादिभिरुपचारैरानर्च अपूजयत्, सम्माननां कुरुते स्म इति भावः ॥३॥

अथ कदाचित्स महात्मा कुसुममासप्रभावविरचितकिसलयलक्ष्मी-माधुर्याणि प्रविकसत्कुसुममनोज्ञप्रहासितानि प्रविततनवशाद्वलकुथास्तरण-सनाथधरणीतलानि कमलोत्पलदलास्तीर्णनिर्मलनीलसलिलानि भ्रमद्भ्र-मरमधुकरीगणोपगीतान्यनिभृतपरभृतबर्हिगणानि मृदुसुरभिशिशिरसुख-पवनानि मनःप्रसादोद्भावनानि नगरोपवनान्यनुविचरन्नन्यतममुद्यानवनं नातिमहता बलकायेन परिवृतः क्रीडार्थमुपजगाम ।

कुसुममासो वसन्तसमयः । लक्ष्मीः शोभा । प्रविकसतां विकासमाप्तां कुसुमानां मनोज्ञानि मनोहराणि प्रहसितानि लक्षणया विकाससौन्दर्याणि यत्र तानि । शाद्वलं [illegible] सः तैः कुथास्तरणं [illegible] । कमलानि रक्त-

पद्मानि, उत्पलानि नीलकमलानि । अनिभृताः मुखराः । मृदुः मन्दः सुरभिः सुगन्धवान्, शिशिरः शीतलश्च अत एव सुखः शरीरसुखावहः पवनो यत्र तानि । मनःप्रसादं चित्तप्रमोदं उद्भावयन्ति जनयन्तीति तथाविधानि । बलकायेन रक्षकगणेन ।

स तत्र पुंस्कोकिलनादिते वने मनोहरोद्यानविमानभूषिते ।
चचार पुष्पानतचित्रपादपे प्रियासहायः सुकृतीव नन्दने ॥ ४ ॥

स इति । सः प्रियासहायः सन् पुंस्कोकिलनादिते मनोहरोद्यानविमानभूषिते पुष्पानतचित्रपादपे वने, नन्दने प्रियासहायः सुकृतीव, चचार इत्यन्वयः ।

अयं भावः—कामिनीसहचरोऽसौ राजकुमारः कोकिलकाकलीमनोहरे त्रिविध-विलासवेदिकाशालिनि कुसुमसमूहाऽऽमोदिनि विलासकानने, नन्दनोद्याने प्रिया-समेतो भाग्यवान् जन इव चिरं विचचार इति ॥ ४ ॥

गीतस्वनैर्मधुरतूर्यरवानुविद्धैर्नृत्यैश्च हावचतुरैर्ललिताङ्गहारैः ।
स्त्रीणां मदोपहृतया च विलासलक्ष्म्या रेमे स तत्र वनचारुतया तया च ॥५॥

गीतस्वनैरिति । सः तत्र मधुरतूर्यरवानुविद्धैः गीतस्वनैः, हावचतुरैर्नृत्यैः ललिताङ्गहारैश्च स्त्रीणां मदोपहृतया विलासलक्ष्म्या च तया वनचारुतया च रेमे इत्यन्वयः ।

सः तत्र विलासोद्याने मधुराः कर्णहृद्या ये तूर्यरवा तूर्यध्वनयस्तैरनुविद्धैस्तदनु-गामिभिः गायन्तीनां स्त्रीणां गीतस्वनैर्गानध्वनिभिः, हावः श‍ृङ्गारहेतुको भावः, तेन चतुरै रमणीयैर्नृत्यै लास्यप्रकारैः, ललिताः कमनीयाः ये अङ्गहाराः नृत्यप्रयुक्ताः अङ्गविक्षेपाः तैश्च, स्त्रीणां युवतीनां मदेन यौवनमदेन उपहृतया पुरस्कृतया विला-सलक्ष्म्या विविधविभ्रमरचनया च तया वनचारुतया उपवनसौन्दर्येण च रेमे अर-मत क्रीडासक्तोऽभूत् ॥ ५ ॥

तत्रस्थं चैनमन्यतमः सुभाषिताख्यायी ब्राह्मणः समभिजगाम । इति स महासत्त्वो कृतोपचारसत्कारश्च तद्रूपशोभापहृतमनास्तत्रोपविवेश । इति स महासत्त्वो काञ्चिदिव मनुभवंस्तदागमनाद्-यौवनानुवृत्त्या पुण्यसमृद्धिभावापन्नं काञ्चिदिव मनुभवंस्तदागमनाद्-स्तन्नबहुमान एव तस्मिन्ब्राह्मणे सुभाषितश्रवणादनवाप्तागमनफले सहसै-

वोत्थितं गीतवादित्रस्वनापसारि कोलाहलमुपशान्तहर्षो हन्त प्रसह्य

जनभयविषादजननं कोलाहलमुपश्रुत्य ज्ञायतां किमेतदिति सादरमन्तः-पुरावचरान्समादिदेश । अथास्य दौवारिका भयविषाददीनवदनाः ससम्भ्रमं द्रुततरमुपेत्य न्यवेदयन्त । एष स देवपुरुषादः कल्माषपादः सौदासः साक्षादिवान्तको नरशतकदनकरणपरिचयाद्राक्षसाधिकक्रूरतरमतिरतिमानुषबलवीर्यदर्पो रक्षःप्रतिभयरौद्रमूर्तिर्मूर्तिमानिव जगत्संत्रास इत एवाभिवर्तते । विद्रुतं च नस्तत्संत्रासग्रस्तधैर्यमुद्भ्रान्त-रथ-तुरग-द्विरदव्याकुलयोधं बलम् । यतः प्रतियत्नो भवतु देवः प्राप्तकालं वा संप्रधार्यमिति ।

सुभाषिताख्यायी सूक्तिनिर्माणपटुः । अनवाप्तेति सुभाषितं श्रावयित्वा तत्फलं द्रव्यलाभादिरूपं अप्राप्तवति इति भावः । वादित्रं वाद्यम् । प्रहर्षस्य आनन्दस्य उपहन्तृ उपरोधकम् । अन्तःपुराऽवचरान् अन्तःपुरपरिचरान् । पुरुषादो नरभक्षकः । कल्माषपाद इत्यपरनामधेयः । कदनं हननम् । रक्षःप्रतिभयेति राक्षसभयङ्करकठोराकृतिरित्यर्थः । तस्मात् यः संत्रासो भयं तेन ग्रस्तं निरस्तं धैर्यं धीरता यस्य तत् । प्रतियत्नः प्रतीकारः ।

अथ सुतसोमो जानानोऽपि तानुवाच—भोः क एष सौदासो नाम, ते तं प्रोचुः । किमेतद्देवस्य न विदितं यथा सुदासो नाम राजा बभूव । स मृगयानिर्गतोऽश्वेनापहृतो वनगहनमनुप्रविष्टः सिंह्या सार्धं योगमगमत् । आपन्नसत्त्वा च सा सिंही संवृत्ता कालान्तरेण च कुमारं प्रसुषुवे । स वनचरैर्गृहीतः सुदासायोपनीतः । अपुत्रोऽहमिति च कृत्वा सुदासेन सम्वर्धितः । पितरि च सुरपुरमुपगते स्वं राज्यं प्रतिलेभे । स मातृदोषादामिषेष्वभिसक्तः । इदमिदं रसवरं मांसमिति स मानुषं मांसमास्वाद्य स्वपौरानेव च हत्वा हत्वा भक्षयितुमुपचक्रमे । अथ पौरास्तद्वधायोद्योगं चक्रुः । यतोऽसौ भीतः सौदासो नररुधिरपिशितबलिभुग्भ्यो भूतेभ्य उपशुश्राव । अस्मात्सङ्कटान्मुक्तोऽहं राज्ञां कुमारशतेन भूतयज्ञं करिष्यामीति । सोऽयं तस्मात्सङ्कटान्मुक्तः । प्रसह्य प्रसह्य चानेन राजकुमारापहरणं कृतम् । सोऽयं देवमप्यपहर्तुमायातः । श्रुत्वा देवः प्रमाणमिति ।

अथ स बोधिसत्त्वः पूर्वमेव विदितवृत्तान्तः सौदासस्य कारुण्या-

त्चिकित्सावहितमतिराशंसमानश्चात्मनि तच्छीलविकृतप्रशमनसामर्थ्यं ..ियाख्यान इव च सौदासाभियाननिवेदने प्रीतिं प्रतिसम्वेदयन्नियत-मित्युवाच—

आपन्नसत्त्वा विधृतगर्भा । आमिषेषु मांसेषु । भूतेभ्यो देवताविशेषेभ्यः । उपशुश्राव श्रावयामास । विदितोऽनुगतः शीलदोषस्य स्वभावदोषस्य विभ्रमो भ्रमात्मकव्यापारो येन सः । प्रियाख्यान इव मधुरभाषीव । प्रतिसंवेदयन् दर्शयन् ।

राज्याच्च्युतेऽस्मिन्नरमांसलोभादुन्मादवक्तव्य इवास्वतन्त्रे ।
त्यक्तस्वधर्मे हतपुण्यकीर्तौ शोच्यां दशामित्यनुवर्तमाने ॥६॥
को विक्रमस्यात्र ममावकाश एवङ्गताद्वा भयसम्भ्रमस्य ।
अयत्नसंरम्भपराक्रमेण पाप्मानमस्य प्रसभं निहन्मि ॥७॥

राज्यादिति । को विक्रमस्येति । [ युग्मकम् ] । नरमांसलोभात् राज्यात् च्युते उन्मादवक्तव्य इव अस्वतन्त्रे, त्यक्तस्वधर्मे हतपुण्यकीर्तौ इति शोच्यां दशा-मनुवर्तमानेऽस्मिन् मम विक्रमस्याऽत्र कोऽवकाशः । एवं गताद्भयसम्भ्रमस्य वा कोऽवकाशः ? अयत्नसंरम्भपराक्रमेण प्रसभं अस्य पाप्मानं निहन्मि इत्यन्वयः ।

नरमांसलोभात् मनुष्याऽमिषासक्त्या राज्यात् च्युते परिभ्रष्टे प्रजा जनैस्ति-रस्कृत इत्यर्थः । उन्मादवक्तव्य इव सोन्माद इव अस्वतन्त्रे मूढचेतसि त्यक्तः स्वधर्मो राजधर्मः प्रजापालनादिरूपो येन तस्मिन् । हता नाशिता प्राचीनभूपालानां पुण्या कीर्तिर्येन तस्मिन् इत्येवंरूपां शोच्यां शोकार्हां दशामवस्थां अनुवर्तमाने प्राप्तवति अस्मिन् सौदासे मम विक्रमस्य पराक्रमस्य अत्र विषये कोऽवकाशः कोऽवसर ? नास्त्यवसर इति भावः । एवंगतात् ईदृशावस्थापन्नात् जनात् भय-सम्भ्रमस्य भयोद्वेगस्य वा कोऽवकाश इति पूर्ववत् । अयत्नसंरम्भः प्रयत्नरहितो यः पराक्रमः उपदेशादिरूपः तेन प्रसभं हठात् अस्य सौदासस्य पाप्मानं पापबुद्धिं निहन्मि निवारयामि ॥ ६–७ ॥

गत्वाऽपि यो नाम मयानुकम्प्यो मद्गोचरं स स्वयमभ्युपेतः ।
युक्तं मयाऽऽतिथ्यमतोऽस्य कर्तुमेवं हि सन्तोऽतिथिषु प्रवृत्ताः ॥८॥

गत्वाऽपीति । यो नाम गत्वाऽपि मयाऽनुकम्प्यः ( अस्ति ) स मद्गोचरं

स्वयमभ्युपेतः, अतोऽस्य मया आतिथ्यं कर्तुं युक्तं, हि सन्तः एवमतिथिषु प्रवृत्ताः ( भवन्ति ) इत्यन्वयः ।

यो नाम । यः खलु गत्वाऽपि स्वयमेव गत्वाऽपि मया अनुकम्प्यः अनुग्राह्यः ( अस्ति ), सः मद्गोचरं मत्सम्मुखं स्वयं अभ्युपेतः स्वयमागतः, अतः अस्य मया आतिथ्यं अतिथिजनोचितः सत्कारः, सादरं भाषणादि कर्तुं युक्तं, हि यतः सन्तः साधवः एवमनयैव रीत्या अतिथिषु प्रवृत्ता भवन्तीति ॥ ८ ॥

तद्यथाधिकारमत्रावहिता भवन्तु भवन्त इति स तानन्तःपुरावचरानुशिष्य विषादविपुलतरपारिप्लवाक्षमागद्गदविलुलितकण्ठं मार्गावरणसोद्यममाश्वासनपूर्वकं विनिवर्त्य युवतिजनं यतस्तत्कोलाहलं ततः प्रससार । दृष्ट्वैव च व्यायतावद्धमलिनवसनपरिकरं वल्कलपट्टविनियतरेणुपरुषप्रलम्बव्याकुलशिरोरुहं प्ररूढश्मश्रुजालावनद्धान्धकारवदनं रोषसंरम्भव्यावृत्तरौद्रनयनमुद्यतासिचर्माणं सौदासं विद्रवदनुपतन्तं राजबलं विगतभयसाध्वसः समाजुहाव । अयमहमरे सुतसोमः । इत एव निवर्तस्व । किमनेन कृपणजनकदनकरणप्रसङ्गेनेति ॥ तत्समाह्वानशब्दाकलितदर्पस्तु सौदासः सिंह इव ततो न्यवर्तत । निरावरणप्रहरणमेकाकिनं प्रकृतिसौम्यदर्शनमभिवीक्ष्य च बोधिसत्त्वमहमपि त्वामेव मृगयामीत्युक्त्वा निर्विशङ्कः सहसा संरम्भद्रुततरमभिसृत्यैनं स्कन्धमारोप्य प्रदुद्राव । बोधिसत्त्वोऽपि चैनं संरम्भदर्पोद्धतमानसं ससंभ्रममाकुलितमतिं राजबलविद्रावणादुपरूढप्रहर्षावलेपं साभिशङ्कमवेत्य नायमस्यानुशिष्टिकालं इत्युपेक्षाञ्चक्रे । सौदासोऽप्यभिमतार्थप्रसिद्ध्या परमिव लाभमधिगम्य प्रमुदितमनाः स्वमावासदुर्गं प्रविवेश ।

अनुशिष्य आज्ञाप्य । पारिप्लवाक्षं आर्द्रनयनम् । मार्गस्य आवरणे अवरोधे सोद्यमं सप्रयत्नम् । प्रससार जगाम । व्यायतो दृढो दीर्घश्च आबद्धः मलिनवसनपरिकरः कटिबन्धो येन तम् । रेणुपरुषाः धूलिरूक्षाः प्रलम्बाः लम्बमानाः व्याकुला व्यस्ताश्च शिरोरुहाः केशाः यस्य तम् । उद्यतः उन्नमितः असिः खड्गः चर्म आवरणं च येन सः तम् । विद्रवत् पलायमानं राजबलं राजसैन्यं अनुपतन्तं अनुयान्तमित्यन्वयः । समाजुहाव आकारयामास । अरे इति नीचसम्बोधने ।

कृपणजनाः दीनजनाः । कदनं हननम् । आवरणं कवचं प्रहरणमायुधं ताभ्यां रहितं निरावरणप्रहरणम् । मृगयामि अन्वेषयामि । प्रदुद्राव पलायनं चकार । राजबलस्य राजसैन्यस्य विद्रावणात् तिरस्करणात् उपारूढ उत्पन्नः प्रहर्षोऽवलेपः सहर्षवर्गौ यस्य तम् । अनुशिष्टिकालः उपदेशकालः । स्वं निजं आवासस्थानभूतं दुर्गम् ।

हतपुरुषकलेवराकुलं रुधिरसमुक्षितरौद्रभूतलम् ।
परुषमिव रुषावमर्त्सयत्सयत्स्फुटदहनैरशिवैः शिवारुतैः ॥ ९ ॥

हतपुरुषेति । हतपुरुषकलेवराकुलं रुधिरसमुक्षितरौद्रभूतलं स्फुटदहनैः अशिवैः शिवारुतैः पुरुषं रुषाऽवभर्त्सयदिवेत्यन्वयः ।

यत् खलु वासस्थानं हताः स्वेन निहता ये पुरुषास्तेषामस्थिशेषैः कलेवरैः शरीरैः आकुलं व्याप्तं, रुधिरेण शोणितेन समुक्षितं सिक्तं अत एव रौद्रं भयानकं भूतलं यत्र तत् । स्फुटः प्रकटीभूतो दहनोऽग्निर्येभ्यस्तैः आशिवैरमङ्गलैः शिवारुतैः जम्बुकीवाशितैः पुरुषं सामान्यजनं रुषा कोपेन अवभर्त्संयत् कुत्सयदिव आसीत् इति शेषः, अपरवक्त्रं वृत्तम् ॥ ९ ॥

गृध्रध्वाङ्क्षाध्यासनरूक्षारुणपर्णैः
कीर्णं वृक्षैर्नैकचिताधूमविवर्णैः ।
रक्षःप्रेतानर्तनबीभत्समशान्तं
दूराद् दृष्टं त्रासजडैः सार्थिकनेत्रैः ॥१०॥

गृध्रेति । गृध्रध्वाक्षाध्यासनरूक्षारुणपर्णैः नैकचिताधूमविवर्णैः वृक्षैः कीर्णं, रक्षःप्रेतानर्तनबीभत्सं अशान्तं त्रासजडैः सार्थिकनेत्रैर्दूरात् दृष्टं (तत् आवासस्थानमासीत्) इत्यन्वयः ।

गृध्राः ध्वाङ्क्षाः वायसाः एतेषामध्यासनेन आवासेन रूक्षाणि कठोराणि अरुणानि जीर्णानि च पर्णानि दलानि येषां तैः नैकाः याः चिताः ताभ्यः समुद्भूतेन धूमेन स्मशानवात्यया विवर्णैः मलिनवर्णैः वृक्षैः पादपैः कीर्णं व्याप्तं, रक्षसां प्रेतानां पिशाचादीनां च आसमन्तात् यन्नर्तनं ताण्डवं तेन बीभत्सं जुगुप्सास्पदं, अशान्तं कटुकोलाहलमयं, त्रासजडैः भयास्तिमितैः सार्थिकाणां सार्थवाहानां भ्रमतां नेत्रैः दूरादेव दृष्टमवलोकितं तदवासस्थानं स्मशानरूपमासीदिति भावः । मत्तमयूर छन्दः ॥१०॥

समावतार्य च तत्र बोधिसत्त्वं तद्रूपसम्पदा विनिबध्यमाननयनः प्रततं वीक्षमाणो विशश्राम ॥ अथ बोधिसत्त्वस्य सुभाषितोपायनाभिगतं ब्राह्मणमकृतसत्कारं तदुद्यानविनिवर्तनप्रतीक्षिणमाशावबद्धहृदयमनुस्मृत्य चिन्ता प्रादुरभूत् । कष्टं भोः !

विनिबध्यमानेति आकृष्टनयनः । प्रततं चिरम् । सुभाषितं सूक्तिश्रावणं तदेव उपायनं उपहारः तेन अभिगतमायातम् ।

सुभाषितोपायनवानाशया दूरमागतः ।
स मां हृतमुपश्रुत्य विप्रः किंनु करिष्यति ॥११॥

सुभाषितोपायनेति । सुभाषितोपायनवान् आशया दूरमागतः स विप्रः मां हृतमुपश्रुत्य किं नु करिष्यति ? इत्यन्वयः ।

अयं भावः—सुभाषितमुपहर्तुं द्रव्यं चाऽधिगन्तुं योऽयं विप्रो दूरान्महत्याऽऽशया मदन्तिकमुपाययौ, स तदलाभे न जाने कियतीं व्यथां प्राप्नुयात् ? इति ॥

आशाविघाताग्निपरीतचेता वैतान्यतीव्रेण परिश्रमेण ।
विनिश्वसिष्यत्यनुशोच्य वा मां स्वभाग्यनिन्दां प्रतिपत्स्यते वा॥१२॥

आशाविघातेति । वैतान्यतीव्रेण परिश्रमेण ( आयातः ) आशाविघाताऽग्निपरीतचेताः मां अनुशोच्य विनिःश्वसिष्यति वा स्वभाग्यनिन्दां वा प्रतिपत्स्यते इत्यन्वयः ।

वैतान्यो वितानो यज्ञस्तत्सम्बन्धी । स चासौ तीव्रः कठिनस्तेन परिश्रमेण व्यापारेण इहायातः आशायाः स्वमनोरथस्य विघातो विनाश एव दाहकत्वादग्निस्तेन परीतं अभितप्तं चेतो यस्य सः स द्विजः मां अनुशोच्य विनिन्द्य विनिःश्वसिष्यति दीर्घं श्वसिष्यति वा, स्वभाग्यनिन्दां वा प्रतिपत्स्यते करिष्यति ॥१२॥

इति विचिन्तयतस्तस्य महासत्त्वस्य तदीयदुःखाभितप्तमनसः कारुण्यपरिचयादश्रूणि प्रावर्तन्त ॥ अथ सौदासः साश्रुनयनमभिवीक्ष्य बोधिसत्त्वं समभिप्रहसन्नुवाच मा तावद्भोः,—

तदीयदुःखेति । ब्राह्मणदुःखेन ।

धीर इत्यसि विख्यातस्तैस्तैश्च बहुभिर्गुणैः ।
अथ चास्मद्वशं प्राप्य त्वमप्यश्रूणि मुञ्चसि ॥१३॥

धीर इति । तैस्तैश्च बहुभिर्गुणैः धीर इति विख्यातोऽसि, अथ च अस्मद्वशं प्राप्य त्वमपि अश्रूणि मुञ्चसि ? इत्यन्वयः ।

एतदत्र तात्पर्यं—बहुभिः शौर्यौदार्यादिभिर्गुणैर्जगति धीर इति प्रसिद्धोऽपि त्वं मद्वशीभूतः कथमश्रुपात विधत्से इति प्रश्नः ॥१३॥

सुष्ठु खल्विदमुच्यते—

आपत्सु विफलं धैर्यं शोके श्रुतमपार्थकम् ।
नहि तद्विद्यते भूतमाहतं यन्न कम्पते ॥१४॥

आपत्स्विति । आपत्सु धैर्यं विफल, शोके श्रुतमपार्थकं ( भवति ) तद्भूतं नहि विद्यते, यत् आहतं ( सत् ) न कम्पते इत्यन्वयः ।

आपत्सु व्यसनेषु धैर्यं धृतिः विफलं निष्फलं भवति, एवं शोके श्रुतं शास्त्राभ्यासो वेदान्तचिन्तनादि अपार्थकं व्यर्थं भवति, तत् तादृशं भूतं जीवः नहि विद्यते, यत् आहत शोकभयादिताडितं सत् न कम्पते न व्याकुलीभवति, जीवजातस्य स्वभाव एवैष इति भावः ॥१४॥

इति । तत्सत्यं तावद्ब्रूहि

प्राणान्प्रियानथ धनं सुखसाधनं वा
बन्धून्नराधिपतितामथवाऽनुशोचन् ।
पुत्रप्रियं पितरमश्रुमुखान्सुतान्वा
स्मृत्वेति साश्रुनयनत्वमुपागतोऽसि ॥१५॥

प्राणानीति । प्रियान् प्राणान्, अथ सुखसाधनं धनं वा, बन्धून्, अथवा नराधिपतितां, अनुशोचन्, ( अथवा ) पुत्रप्रियं पितरं अश्रुमुखान् सुतान् वा स्मृत्वा इति साश्रुनयनत्वं उपागतोऽसि ? इत्यन्वयः ।

अयं भावः—पूर्वोक्तेषु सांसारिकेषु सम्बन्धेषु कतमं स्मरतस्ते नयनयोरश्रुप्रवाहः प्रवर्तते ? इति ॥१५॥

बोधिसत्त्व उवाच—

न प्राणान्पितरौ न चैव तनयान्बन्धून्न दारान्न च
नैवैश्वर्यसुखानि संस्मृतवतो बाष्पोद्गमोऽयं मम ।
आशावांस्तु सुभाषितैरभिगतः श्रुत्वा हतं मां द्विजो
नैराश्येन स दह्यते ध्रुवमिति स्मृत्वाऽस्मि सास्रेक्षणः ॥१६॥

न प्राणानिति । न प्राणान्, न चैव पितरौ, न तनयान्, न बन्धून्, न च दारान्, नैव ऐश्वर्यसुखानि संस्मृतवतो ममाऽयं बाष्पोद्गमः ( अस्ति ), किन्तु सुभाषितैरभिगतः आशावान् द्विजः मां हतं श्रुत्वा सः ध्रुवं नैराश्येन दह्यते इति स्मृत्वा सास्त्रेक्षणः अस्मि इत्यन्वयः ।

अयं भावः—न पूर्वोक्तान् सर्वान् सम्बन्धिनो धनादिकं वाऽनुस्मरतो मम बाष्पोद्गमः, किन्तु सुभाषितानि निर्माय मदन्तिके द्रव्यलाभाशया समागतस्य द्विजन्मनो नैराश्यमनुचिन्त्यैव रोदिमि इति ॥१६॥

तस्माद्विसर्जयितुमर्हसि तस्य यावदाशाविघातमथितं हृदयं द्विजस्य ।
सम्माननाम्बुपरिषेकनवीकरोमि तस्मात्सुभाषितमधूनि च संविभर्मि ॥

तस्मादिति । तस्मात् ( मां ) विसर्जयितुमर्हसि, यावत् तस्य द्विजस्य आशाविघातमथितं हृदयं सम्माननाम्बुपरिषेकनवीकरोमि, तस्मात् सुभाषितमधूनि च संविभर्मि इत्यन्वयः ।

तस्माद्धेतोर्मां विसर्जयितुमर्हसि मां तावन्मुञ्च, यावत् तस्य द्विजस्य आशाविघातेन मनोरथभङ्गेन मथित पीडितं हृदयं चेतः, सम्मानना अभ्युपपत्तिः सैव अम्बुजलं तेन यः परिषेकः तेन नवीकरोमि सोत्साहं करोमि, तस्मात् द्विजात् सुभाषितान्येव मधूनि क्षौद्राणि आह्लादहेतुत्वात् तानि च सम्विभर्मि संगृह्णामि ॥१७॥

प्राप्यैवमानृण्यमहं द्विजस्य गन्ताऽस्मि भूयोऽनृणतां तवापि ।
इहाऽऽगमात्प्रीतिकृतक्षणाभ्यां निरीक्ष्यमाणो भवदीक्षणाभ्याम् ॥१८॥

प्राप्यैवमिति । एवमहं द्विजस्य आनृण्यं प्राप्य, भूयः प्रीतिकृतक्षणाभ्यां भवदीक्षणाभ्यां निरीक्ष्यमाणः (सन्) इहाऽऽगमात् तवाऽपि अनृणतां गन्ताऽस्मि इत्यन्वयः ।

अयं भावः—त्वयैव विसृष्टोऽहं तस्य मदेकतानमनसो ब्राह्मणस्य मनोरथपूरणेन आनृण्यमवाप्य, त्वया सहर्षं विलोक्यमान इहाऽऽगमिष्यामि इति । क्षण उत्सवः ॥१८॥

मा चापयातव्यनयोऽयमत्येत्येवं विशङ्काकुलमानसो भूः ।
अन्यो हि मार्गो नृप मद्विधानामन्यादृशस्त्वन्यजनाभिपन्नः ॥१९॥

माचेति । अयं च अपयातव्यनयोऽस्येति एवं शङ्काकुलमानसश्च मा भूः । हे नृप ! हि मद्विधानां मार्गोऽन्यः, अन्यजनाऽभिपन्नस्तु अन्यादृश एवेत्यन्वयः ।

अयं च ब्राह्मणोदन्तरूपः अपयातस्य इतोऽपसरणस्य व्यनयो व्याजः कपटः अस्य मे वर्तते इति एवं शङ्कमानसश्चिन्ततो मा भूः । हे नृप ! सौदास ! हि यतो मद्विधानां सत्कुलजातानां मार्गः शील-प्रतिज्ञादिरूपोऽन्यः भिन्नः साधारणजनभिन्नः, ( अस्ति ), अन्यैर्जनैर्वञ्चकैरभिपन्नोऽङ्गीकृतस्तु अन्यादृशो मदीयान्मार्गाद्भिन्न एवाऽस्तीति ॥१९॥

सौदास उवाच—

इदं त्वया ह्यादृतमुच्यमानं श्रद्धेयतां नैव कथञ्चिदेति ।
को नाम मृत्योर्वदनाद्विमुक्तः स्वस्थः स्थितस्तत्पुनरभ्युपेयात् ॥२०॥

इदमिति । इदं हि त्वया आदृतं उच्यमानं कथंचित् ( अपि ) श्रद्धेयतां नैव एति, मृत्योर्वदनात् विमुक्तः को नाम स्वस्थः स्थितः ( सन् ) पुनस्तत् अभ्युपेयात् इत्यन्वयः ।

अत्रेदं तात्पर्यं—त्वया साऽवष्टम्भं प्रतिज्ञातमपीदं वचनं न खलु विश्वासजननायाऽलं भवति, हि मरणमुखान्मुक्तः कः सचेताः पुनरात्मना तदनुसरिष्यति ॥२०॥

दुरुत्तरं मृत्युभयं व्यतीत्य सुखे स्थितः श्रीमति वेश्मनि स्वे ।
किं नाम तत्कारणमस्ति येन त्वं मत्समीपं पुनरभ्युपेयाः ॥२१॥

दुरुत्तरमिति । दुरुत्तरं मृत्युभयं व्यतीत्य श्रीमति स्वे वेश्मनि सुखे स्थितः त्वं येन मत्समीपं पुनरभ्युपेयाः किं नाम तत् कारणमस्ति ? इत्यन्वयः ।

दुरुत्तरं दुर्लङ्घ्यं मृत्युभयं व्यतीत्य उल्लङ्घ्य श्रीमति समृद्धिशालिनि स्वे वेश्मनि राजमन्दिरे सुखे स्थितो विविधभोगपरस्त्व येन हेतुना मत्समीपं मदन्तिकं अभ्युपेयाः पुनरागमिष्यसि, किं नाम तथाविधं लोकोत्तरं कारणमस्ति ? इति प्रश्नः ॥

बोधिसत्त्व उवाच—कथमेवं महदपि ममागमनकारणमत्र भवान्नावबुध्यते । ननु मया प्रतिपन्नमागमिष्यामीति । तदलं मां खलजनसमतयैवं परिशङ्कितुम् । सुतसोमः खल्वहम् ।

प्रतिपन्नं स्वीकृतं प्रतिज्ञातमिति यावत् ।

लोभेन मृत्योश्च भयेन सत्यं सत्यं यदेके तृणवत्त्यजन्ति ।
सतां तु सत्यं वसु जीवितं च कृच्छ्रेऽप्यतस्तन्न परित्यजन्ति ॥२२॥

लोभेनेति । एके यत् लोभेन मृत्योर्भयेन च सत्यमेव सत्यं तृणवत् त्यजन्ति,

सतां तु सत्यं वसु जीवितं च ( अस्ति ), अतः कृच्छ्रेऽपि तन्न परित्यजन्ति इत्यन्वयः ।

एके केचन जनाः यत् खलु लोभेन द्रव्यादिलिप्सया मृत्योर्भयेन प्राणभयेन च सत्यं अवितथमेव सत्यं सत्यभाषणव्रतं तृणवत् अतिलघु मन्यमानाः त्यजन्ति, सतां साधूनां पुरुषाणां तु सत्यं वसु द्रव्यं जीवितं जीवनं च ( अस्ति ) अतो हेतोः कृच्छ्रेऽपि महति कष्टे समापतितेऽपि साधवस्तत् सत्यभाषणव्रतं न परित्यजन्ति नोज्झन्ति ॥ २२ ॥

न जीवितं यत्सुखमैहिकं वा सत्याच्च्युतं रक्षति दुर्गतिभ्यः ।
सत्यं विजह्यादिति कस्तदर्थं यश्चाकरः स्वर्गयशःसुखानाम् ॥२३॥

न जीवितमिति । यत् जीवितं ऐहिकं सुखं वा सत्यात् च्युतं ( पुरुषं ) दुर्गतिभ्यो न रक्षति, इति कस्तदर्थं सत्यं विजह्यात् यत् च स्वर्गयशःसुखानां आकरः ( अस्ति ) इत्यन्वयः ।

यत् यस्मात् हेतोः जीवितं जीवनं ऐहिकं सुखं वा सत्यात् सत्यव्रतात् च्युतं परिभ्रष्टं पुरुषं दुर्गतिभ्यो लौकिकीभ्यः पारलौकिकीभ्यश्च न रक्षति, इति को जनस्तदर्थं जीवितार्थे ऐहिकसुखार्थे वा सत्यं विजह्यात् त्यजेत् ? यत् च सत्यं स्वर्गस्य उत्तमलोकस्य यशसः कीर्तेः सुखानां च आकरः खनिः प्राप्तिसाधनं अस्ति ॥२३॥

संदृश्यमानव्यभिचारमार्गे त्वदृष्टकल्याणपराक्रमे वा ।
श्रद्धेयतां नैति शुभं तथा च किं वीक्ष्य शङ्का तव मय्यपीति ॥२४॥

संदृश्यमानेति । संदृश्यमानव्यभिचारमार्गे अदृष्टकल्याणपराक्रमे वा (पुरुषे) तु यथा शुभं श्रद्धेयतां नैति, तथा च किं वीक्ष्य तव इति मयि अपि शङ्का ( समुदेति ) ? इत्यन्वयः ।

संदृश्यमानः अवलोक्यमानः व्यभिचारमार्गः लोकाचारविरोधः यत्र तस्मिन् अदृष्टोऽनवलोकितः कल्याणः सकलजनशुभावहः पराक्रमो यत्र तस्मिन् वा पुरुषे तु यथा शुभ श्रद्धेयतां नैति, सत्यप्रतिज्ञा श्रद्धेया न भवति, तथा च तथाविधं तु किं अनुचितं चरितं वीक्ष्य तव इत्येवंरूपा अलीकभाषणविषयिणी मय्यपि शङ्का समुदेति ? इति प्रश्नः ॥२४॥

त्वत्तो भयं यदि च नाम ममाभविष्य—
स्त्सङ्गः सुखेषु करुणाविकलं मनो वा ।
विख्यातरौद्रचरितं ननु वीरमानी
त्वामुद्यतप्रहरणावरणोऽभ्युपैष्यम् ॥२५॥

त्वत्त इति । यदि च मम त्वत्तो भयं नाम अभविष्यत् सुखेषु सङ्गः करुणाविकलं मनो वा अभविष्यत् ( तर्हि ) वीरमानी अहं उद्यतप्रहरणाऽऽवरणः ( सन् ) विख्यातरौद्रचरितं त्वां अभ्युपैष्यं ननु इत्यन्वयः ।

यदि च मम त्वत्तः त्वत्सकाशात् भयं नामेति सम्भावनायाम् । अभविष्यत् सुखेषु विषयोपभोगेषु सङ्गः आसङ्गः, करुणाविकलं करुणया विकलं मृदु मनो वा अभविष्यत् , ( तर्हि ) वीरमानी आत्मानं वीरं मनुते इति तथाविधोऽहं उद्यतं उन्नमितं प्रहरणं आयुधं आवरणं कवचं च येन सः तादृशः सन् विख्यातरौद्रचरितं विश्रुतनिर्घृणव्यवसायं त्वां अभ्युपैष्यं अगमिष्यं ननु इति निश्चये ॥२५॥

त्वत्संस्तवस्त्वयमभीप्सित एव मे स्या-
त्तस्य द्विजस्य सफलश्रमतां विधाय ।
एष्याम्यहं पुनरपि स्वयमन्तिकं ते
नास्मद्विधा हि वितथां गिरमुद्गिरन्ति ॥२६॥

त्वत्संस्तव इति । तस्य द्विजस्य सफलश्रमतां विधाय अयं त्वत्संस्तवस्तु मे अभीप्सित एव स्यात् , अहं पुनरपि स्वयं ते अन्तिकं एष्यामि हि अस्मद्विधाः वितथां गिरं नोद्गिरन्ति इत्यन्वयः ।

द्विजस्य कामान् सफलीकृत्य कृतकृत्योऽहं त्वदन्तिके स्वयमागमिष्यामि, अस्मद्विधकुलीनजनवचने त्वया शङ्का च न विधेयेति भावः ॥२६॥

अथ सौदासस्तद्बोधिसत्त्ववचनं विकल्पितमिवामृष्यमाणश्चिन्तापेदे । सुष्ठु खल्वयं सत्यवादितया च धार्मिकतया च विकत्थते । किं च तावन्ममानेन नष्टेनापि स्यात् । अस्ति हि मे स्वभुजवीर्यप्रतापाद्वशीकृतं शतमात्रं क्षत्रियकुमाराणाम् । तैर्यथोपयाचितं भूतयज्ञं करिष्यामीति विचिन्त्य पश्यामि तावदस्य सत्यानुरागं धर्मप्रियतां च । बोधिसत्त्वमुवाच

तेन हि गच्छ द्रक्ष्यामस्ते सत्यप्रतिज्ञतां धार्मिकतां च।

विकल्पितं संदिग्धम्। विकत्थते गर्वं दर्शयति।

गत्वा कृत्वा च तस्य त्वं द्विजस्य यदभीप्सितम्।
शीघ्रमायाहि यावत्ते चितां सज्जीकरोम्यहम् ॥२७॥

गत्वेति। त्वं गत्वा तस्य द्विजस्य यदभीप्सितं (तत् च) कृत्वा, शीघ्रमायाहि, यावदहं ते चितां सज्जीकरोमि इत्यन्वयः। भावोऽपि स्पष्ट एव ॥२७॥

अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य स्वभवनमभिगतः प्रतिनिन्द्यमानः स्वेन जनेन तमाहूय ब्राह्मणं तस्माद्गाथाचतुष्टयं शुश्राव। तच्छ्रुत्वा सुभाषिताभिप्रसादितमनाः स महासत्त्वः संराधयन्प्रियवचनसत्कारपुरःसरं साहस्रिकीं गाथां कृत्वा समभिलषितेनार्थेन तं ब्राह्मणं प्रतिपूजयामास। अथैनं तस्य पिताऽस्थानातिव्ययनिवारणोद्यतमतिः प्रस्तावक्रमागतं सानुनयमित्युवाच—तात! सुभाषितप्रतिपूजने साधु मात्रां ज्ञातुमर्हसि। महाजनः खलु ते भर्तव्यः कोशसम्पदपेक्षिणी च राजश्रीरतस्त्वां ब्रवीमि।

प्रतिनन्द्यमानोऽभिनन्द्यमानः। साहस्रिकीं सहस्रमुद्रार्हाम्। अस्थाने अगते योऽतिव्ययो द्रव्योत्सर्गस्तन्निवारणोद्यतमतिः। मात्रां मर्यादाम्। महाजनः महान् जनसमुदायः। भर्तव्यः पालनीयः।

शतेन सम्पूजयितुं सुभाषितं परं प्रमाणं न ततः परं क्षमम्।
अतिप्रदातुर्हि कियच्चिरं भवेद्धनेश्वरस्यापि धनेश्वरद्युतिः ॥२८॥

शतेनेति। सुभाषितं शतेन सम्पूजयितुं (उचित) परं प्रमाणं तु ततः परं न क्षमं, हि अतिप्रदातुर्धनेश्वरस्याऽपि कियच्चिरं धनेश्वरद्युतिः भवेत् इत्यन्वयः।

द्विजोक्तं सुभाषितं मुद्राणां शतेन सम्पूजयितुं सम्मानयितुं उचितमिति शेषः। परं प्रमाणं तदधिकं मुद्राप्रमाणं तु ततः परं ततोऽग्रे न क्षमं न योग्यम्। हि यतोऽतिप्रदातुर्निरन्तरं दानशीलस्य धनेश्वरस्य कुबेरस्याऽपि कियच्चिरं सुचिरं कियत्कालपर्यन्तं धनेश्वरद्युतिः धनेश्वरत्वं सुस्थिरं भवेदिति प्रश्नः। कुबेरोऽपि निरन्तरधनव्यये निःश्रीको जायेत इति भावः ॥२८॥

समर्थमर्थः परमं हि साधनं न तद्विरोधेन यतश्चरेत्प्रियम्।
नराधिपं श्रीर्न हि कोशसम्पदा विवर्जितं वेशवधूरिवेक्षते ॥२९॥

समर्थमिति । हि अर्थः समर्थं परमं साधनं ( खलु ) ततः तद्विरोधेन प्रियं न चरेत्, कोशसम्पदा विवर्जितं नराधिपं श्रीः वेशवधूरिव नहि ईक्षते इत्यन्वयः ।

हि यतस्तावत् अर्थः द्रव्यं समर्थं सकलापन्निवारणसमर्थं परमं श्रेष्ठतरं साधनमस्ति खलु, ततश्च तस्य धनस्य विरोधेन नाशकव्यवसायेन स्वस्य प्रियमभीष्टं कर्म न चरेत् न कुर्यात्, कोशसम्पदा द्रव्यसांहाय्येन विवर्जितं रहितं नराधिपं राजानं श्रीर्लक्ष्मीः वेशवधूर्वाराङ्गनेव नहि ईक्षते नावलोकयति विमुखी भवति ॥२९॥

बोधिसत्त्व उवाच—

अर्घप्रमाणं यदि नाम कर्तुं शक्यं भवेद्देव सुभाषितानाम् ।
व्यक्तं न ते वाच्यपथं व्रजेयं तन्निष्क्रयं राज्यमपि प्रयच्छन् ॥३०॥

अर्घप्रमाणमिति । हे देव ! यदि नाम सुभाषितानां अर्घप्रमाणं कर्तुं शक्यं भवेत्, ( तर्हि ) तन्निष्क्रयं राज्यमपि प्रयच्छन् व्यक्तं ते वाच्यपथं न व्रजेयमित्यन्वयः ।

हे देव ! राजन् ! यदि नाम नामेति सम्भावनायाम् । सुभाषितानां सूक्तीनां अर्घः मूल्यं तस्य प्रमाणं ईयत्ता कर्तुं शक्या भवेत् यदि निर्णीयते, तर्हि तेषां सुभाषितानां निष्क्रयं मूल्यभूतं राज्यमपि प्रयच्छन् राज्यमपि सकलं ब्राह्मणेभ्यो दत्वा व्यक्तं स्फुटं यथा स्यात्तथा ते तव वाच्यपथं वाच्यतां ( निन्दनीयत्वं ) न व्रजेयं न प्राप्नुयाम् । तेषां ततोऽप्यधिकमूल्यत्वादिति भावः ॥३०॥

श्रुत्वैव यन्नाम मनःप्रसादं श्रेयोऽनुरागः स्थिरतां च याति ।
प्रज्ञा विवृद्धया वितमस्कतां च क्रय्यं ननु स्यादपि तत्स्वमांसैः ॥३१॥

श्रुत्वैवेति । यन्नाम श्रुत्वैव मनःप्रसादं, श्रेयोऽनुरागः च स्थिरतां याति, प्रज्ञा विवृद्धया वितमस्कतां च याति, तत् स्वमांसैरपि क्रय्यं स्यात् ननु इत्यन्वयः ।

यन्नाम यत् खलु सुभाषितं श्रुत्वैव यत् श्रवणकालाऽनन्तरमेव मनश्चेतः प्रसादं नैर्मल्यं, श्रेयसि कल्याणे धर्मादौ वा अनुरागोऽभिलाषश्च स्थिरतां दृढतां याति, प्रज्ञा बुद्धिः विवृद्धया बहुविषयज्ञानेन वितमस्कतां विशदतां च याति, तत् सुभाषितं स्वमांसैरपि स्वदेहमांसनिष्क्रयेणाऽपि क्रय्यं क्रेतुं योग्यं ग्राह्यं स्यात् ननु इति निश्चये ॥३१॥

दीपः श्रुतं मोहतमःप्रमाथी चौराद्यहार्यं परमं धनं च ।
सम्मोहशत्रुव्यथनाय शस्त्रं नयोपदेष्टा परमश्च मन्त्री ॥३२॥

आपद्गतस्याप्यविकारि मित्रमपीडनी शोकरुजश्चिकित्सा।
बलं महद्दोषबलावमर्दि परं निधानं यशसः श्रियश्च ॥३३॥

दीप इति। आपद्गतस्येति। [युग्मकमेतत्] श्रुतं मोहतमःप्रमाथी दीपः चौराद्यहार्यं परमं धनं च, सम्मोहशत्रुव्यथनाय शस्त्रं, नयोपदेष्टा परमः मन्त्री च। आपद्गतस्याऽपि अविकारि मित्रं, अपीडनी शोकरुजः चिकित्सा, दोषबलावमर्दि महत् बलं, यशसः श्रियश्च परं निधानं अस्ति इत्यन्वयः।

श्रुतं शास्त्रानुसारि समाकर्ण्यमानं सुभाषितं मोहो बुद्धिवैकल्यमेव तमोऽन्धकारस्तस्य प्रमाथी नाशको दीपः प्रदीपः, चौरादिभिस्तस्करादिभिरहार्यं हर्तुमशक्यं परमं अलौकिकं धनं च, सम्मोहो व्यामोह एव शत्रुस्तस्य व्यथनाय पीडनाय शस्त्रमायुधं, नयो नीतिशास्त्रं तस्योपदेष्टा उपदेशकर्ता परमः श्रेष्ठो मन्त्री सचिवश्च। आपद्गतस्य व्यसनादितस्याऽपि अविकारि विकाररहितं मित्रं सन्मार्गसूचकत्वात्। न पीडयतीत्यपीडनी अक्लेशसाध्या शोक एव रुक् व्याधिः तस्याचिकित्साप्रशमनोपायः, दोषाः कामक्रोधादयस्तेषां यत् बलं प्रभावस्तमवमर्दयतीति तथाविधं महत् बलं साधनं, यशसः कीर्तेः श्रियः सम्पदश्च परं निधानमायतनमस्तीति शेषः। अत्र सर्वत्र मालारूपकमलङ्कारः ॥३२–३३॥

सत्सङ्गमे प्राभृतशोभनस्य सभासु विद्वज्जनरञ्जनस्य।
परप्रवादद्युतिभास्करस्य स्पर्धावतां कीर्तिमदापहस्य ॥३४॥

सत्सङ्गम इति। [कलापकमेतत्] सत्सङ्गमे प्राभृतशोभनस्येत्यादि अन्वयः सरल एव। सत्सङ्गमे साधु-विद्वज्जनसङ्गमे प्राभृतमुपायनं तत्र शोभनस्य रमणीयस्य, सभासु विद्वद्गोष्ठीषु विद्वज्जनानां विदुषां पुरुषाणां रञ्जनस्य मनोहरस्य परैरन्यैः साकं यः प्रवादो विवादः स एव द्युतिस्तेजस्तत्र भास्करस्य सूर्यवत् प्रकाशमानस्य, स्पर्धा अन्येषां वैदुष्यसम्पदादौ स्पृहा तद्वतां कीर्तिमदं यशोगर्वमपहन्तीति तस्य, वाक्सौष्ठवस्य श्रुतश्रीविशेषहेतुरित्यग्रिमेणाऽन्वयः ॥३४॥

प्रसन्ननेत्राननवर्णरागैरसंस्कृतैरप्यतिहर्षलब्धैः।
संराधनव्यप्रकराग्रदेशैर्विख्याप्यमानातिशयक्रमस्य ॥३५॥

प्रसन्नेति। अन्वयस्त्वत्राऽपि सरल एव। प्रसन्नो विशदः नेत्राननयोः नयनमुखयोर्वर्णरागः आकारवर्णः येषां तैः, असंस्कृतैरप्रबुद्धैः अपठितैरपि अतिहर्षलब्धैः

लंग्वहर्षातिशयैरित्यर्थः । संराधने सम्मानमार्थं व्यग्रा व्यस्ताः कराग्रदेशाः येषां तैः, तैरपि जनैर्विख्याप्यमानः प्रकटीकृतः अतिशयस्य वैशिष्ट्यस्य क्रमो यस्य तस्य ॥३५॥

विस्पष्टहेत्वर्थनिदर्शनस्य विचित्रशास्त्रागमपेशलस्य ।
माधुर्यसंस्कारमनोहरत्वादक्लिष्टमाल्यप्रकरोपमस्य ॥३६॥

विस्पष्टेति । अन्वयोऽत्र क्रमेणैव । विस्पष्टं स्फुटं हेत्वर्थनिदर्शनं कार्यकारणभावोदाहरणानि यत्र तस्य । विचित्रो बहुभेदो यः शास्त्रागमः शास्त्रसम्प्रदायः तेन पेशलस्य रुचिरस्य । माधुर्यं वर्णानां मञ्जुलत्वं, संस्कारो व्याकरणादिशुद्धिः, ताभ्यां मनोहरत्वात् अक्लिष्टोऽनुपभुक्तो यो माल्यप्रकरः पुष्पसंदोहस्तदुपमस्य ॥३६॥

विनीतदीप्तप्रतिभोज्ज्वलस्य प्रसह्य कीर्तिप्रतिबोधनस्य ।
वाक्सौष्ठवस्यापि विशेषहेतुर्योगात्प्रसन्नार्थगतिः श्रुतश्रीः ॥३७॥

विनीतेति । विनीतदीप्तप्रतिभोज्ज्वलस्य प्रसह्य कीर्तिप्रतिबोधनस्य वाक्सौष्ठवस्याऽपि प्रसन्नार्थगतिः श्रुतश्रीः योगात् विशेषहेतुर्भवति इत्यन्वयः ।

विनीता शिक्षिता दीप्ता उज्ज्वला च या प्रतिभा नवनवोन्मेषशालिनी बुद्धिः, तया उज्ज्वलस्य, प्रसह्य बलादेव कीर्तेः प्रतिबोधनस्य उत्थापकस्य यशः सम्पादकस्येति भावः । वाक्सौष्ठवस्य सुभाषितामृतस्याऽपि प्रसन्ना प्रसादपूर्णा विशदा अर्थगतिरर्थप्रवाहो यस्याः सा श्रुतश्रीः शास्त्राभ्याससम्पत् योगात् सयोगात् विशेषहेतुर्भवति विच्छित्तिविशेषं जनयति ॥३७॥

श्रुत्वा च वैरोधिकदोषमुक्तं त्रिवर्गमार्गं समुपाश्रयन्ते ।
श्रुतानुसारप्रतिपत्तिसारास्तरन्त्यकृच्छ्रेण च जन्मदुर्गम् ॥३८॥

श्रुत्वा चेति । श्रुतानुसारप्रतिपत्तिसाराः ( जनाः ) श्रुत्वा च वैरोधिकदोषमुक्तं त्रिवर्गमार्गं समुपाश्रयन्ते, अकृच्छ्रेण च जन्मदुर्गं तरन्ति इत्यश्रुतानुसारं या प्रतिपत्तिः कर्मानुष्ठानं तदेव सारः कर्तव्यं येषां ते तथाविधाः जनाः सुभाषितामृतं श्रुत्वा च वैरोधिकदोषैर्लोभक्रोधादिभिर्मुक्तं त्रिवर्गमार्गं त्रिवर्गपदवीं समुपाश्रयन्ते अनुसरन्ति । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । अकृच्छ्रेण अक्लेशेन च जन्मदुर्गं जन्ममरणात्मकं संसारबन्धं तरन्ति उल्लङ्घयन्ति । यतस्ते सुभाषितं मोक्षस्याऽपि हेतुर्भवतीति भावः ॥३८॥

गुणैरनेकैरिति विश्रुतानि प्राप्तान्यहं प्राभृतवच्छ्रुतानि ।
शक्तः कथं नाम न पूजयेयमाज्ञां कथं वा तव लङ्घयेयम् ॥३९॥

गुणैरिति । इति अनेकैर्गुणैर्विश्रुतानि प्राभृतवत् प्राप्तानि श्रुतानि शक्तोऽहं कथं नाम न पूजयेयं, तवाऽऽज्ञां वा कथं लङ्घयेयमित्यन्वयः ।

इत्येवं अनेकैर्बहुविधैर्गुणैर्विश्रुतानि स्पृहणीयानि प्राभृतवत् उपहाररूपेण प्राप्तानि श्रुतानि सूक्तानि शक्तोऽहं धनधान्यसम्पन्नोऽप्यहं कथं नाम न पूजयेयं कुतो नाऽर्चयेयं, तवाऽऽज्ञामनुशासनं वा कथं लङ्घयेयमिति सन्देहदोलारूढोऽस्मीति भावः ॥३९॥

यास्यामि सौदाससमीपमस्मादर्थो न मे राज्यपरिश्रमेण ।
निवृत्तसङ्केतगुणोपमर्दे लभ्यश्च यो दोषपथानुवृत्त्या ॥४०॥

यास्यामीति । अस्मात् सौदाससमीपं यास्यामि राज्यपरिश्रमेण मे अर्थः न, यश्च निवृत्तसंकेतगुणोपमर्दे दोषपथानुवृत्त्या लभ्यः ( अस्ति ) इत्यन्वयः ।

अस्माद् हेतोः सौदासस्य समीपं यास्यामि गमिष्यामि, राज्यपरिश्रमेण राज्यसञ्चालनलोभेन मे अर्थः न, प्रयोजनं न, यश्च राज्यादिसुखरूपः निवृत्तसंकेतः सञ्जातारम्भः गुणोपमर्दः यत्र तस्मिन् वस्तुनि दोषपथानुवृत्त्या दुष्टमार्गानुसारेण लभ्यः प्राप्यश्च वर्तते, अतः तेन मे प्रयोजनं नेति भावः ॥४०॥

अथैनं पिता स्नेहादसमुत्पतितसम्भ्रमः सादरमुवाच—तवैव खलु तात हितावेक्षिणा मयैवमभिहितम् । तदलमत्र ते मन्युवशमनुपरीतुम् । द्विषन्तस्ते सौदासवशं गमिष्यन्ति । अथापि प्रतिज्ञातं त्वया तत्समीपोपगमनमतः सत्यानुरक्षी तत्सम्पादयितुमिच्छसि । तदपि ते नाहमनुज्ञास्यामि । आत्मार्थं हि स्वप्राणपरिरक्षानिमित्तं गुरुजनार्थं चानृतमार्गो वेदविहित इति । तत्परिहारश्रमेण तव कोऽर्थः । अथ कामाभ्यां च विरोधदृष्टं धर्मसंश्रयमनयमिति व्यपनयतीति च राज्ञां भवतेने नातिकुशलाः । तदलमनेनास्मन्मनस्तापिना स्वार्थनिरपेक्षेण ते निर्बन्धेन । अथाप्ययशस्यं माष धर्मविरोधि चेति प्रतिज्ञाविसंवादमनुपश्यत्वाम व्यवस्यन्ते मतिः । एवमपीदं त्वद्विनाशमार्गार्थं समुद्युक्तं मज्जनेव नो हस्त्यश्व-रथपत्तिकायं सम्पन्नमनुरक्तं कृतास्त्रशूरपुरुषमनल्पमरनाराजितं

महन्महौघभीमं वक्त्रम् । तदनेन परिवृतः समभिगम्यैनं वशमानयान्तकवशं वा प्रापय । एवमन्यथं प्रतिज्ञा सम्पादिता स्यादात्मरक्षा चेति । बोधिसत्त्व उवाच—नोत्सहे देवान्यथा प्रतिज्ञातुमन्यथा कर्तुं शोच्येषु वा व्यसनपंक्तिनिमग्नेषु नरकाभिमुखेषु सुहृत्सु स्वजनपरित्यक्तेष्वनाथेषु च तद्विधेषु प्रहर्तुम् ।

मन्युवशं क्रोधावेगम् । अशातकं पापजनकं न, अर्थकामाभ्यामिति 'अन्योन्यानुपघातकं त्रिवर्गं सेवेत' इति वात्स्यायनोक्तेः । निर्बन्धेन आग्रहेण । प्रतिज्ञाविसम्वादनं प्रतिज्ञाप्रतिकूलमाचरणम् । पत्तिः पदातिः । कृतास्त्राः अस्त्रकुशलाः ।

अपि च—

दुष्करं पुरुषादोऽप्याकुदारं चाकरोन्मयि ।
मद्वचः प्रत्ययाद्यो मां व्यसृजद्वशमागतम् ॥४१॥
लब्धं तत्कारणाच्चेदं मया तात सुभाषितम् ।
उपकारी विशेषेण सोऽनुकम्प्यो मया यतः ॥४२॥

दुष्करमिति लब्धमिति च । असौ पुरुषादः दुष्करमुदारं च मयि अकरोत्, यो मद्वचः प्रत्ययात् वशमागतं मां व्यसृजत् । हे तात ! तत्कारणाच्चेदं सुभाषितं मया लब्धं, यतः स उपकारी ( ततः ) मया विशेषेणानुकम्प्यः (भवति) इत्यन्वय ।

अयं भावः—तेन नरभक्षकेण मयि तीव उदारमाचरणं कृतं, विश्वासवता येनाऽहं वशीभूतोऽपि विसृष्टः, तदनुकम्पया चेदमनूल्यं सुभाषितमपि मयाऽधिगतम् । अतः स मया वञ्चयितुं न योग्य इति ॥४१-४२॥

अलं चात्र देवस्य मदत्ययाशङ्कया । का हि तस्य शक्तिरिति मामेवमभिगतं विहिंसितुमिति ॥ एवमनुनीय स महात्मा पितरं विनिवारणसोद्यमं च विनिवर्त्य प्रणयिजनमनुनीय बलकायमेकाकी विगतभयदैन्यः सत्यानुरक्षी लोकहितार्थं पुरुषादस्याभिमुखं तांश्चक्रेतनमभिगाम । दूरादेवावलोक्य सं तासदं मह नरत्वमात सत्पथा एभिवृद्धबहुमानप्रसादः प्रभ्याषावरूढक्रूरतामाह समतेरपि व्यक्तमिति चिन्तामापेदे । अहहह !

अत्यया शङ्कया प्राणभयेन। बलकायं सैन्यसंनाहन्। अभिविनेष्यन् शिक्षयिष्यन्। अहहेति विस्मये।

आश्चर्याणां बताश्चर्यमद्भुतानां तथाऽद्भुतम्।
सत्यौदार्यं नृपस्येदमातमानुषदैवतम् ॥४३॥
मृत्युरौद्रस्वभावं मां विनीतभयसम्भ्रमः।
इति स्वयमुपेतोऽयं हो धैर्यं साधु सत्यता ॥४४॥

आश्चर्याणामिति। मृत्युरौद्रेति। नृपस्येदं अतिमानुषदैवतं सत्यौदार्यं आश्चर्याणामाश्चर्यं, तथा अद्भुतानां अद्भुतं बत। मृत्युरौद्रस्वभावं मां विनीतभयसम्भ्रमोऽयमिति स्वयमुपेतः, हो धैर्यं, साधु सत्यतेत्यन्वयः।

अयं भावः—अस्य राज्ञ इदं लोकोत्तरं सत्यप्रतिज्ञानुसरणमतिशयेन मे विस्मयं जनयति, यतश्चाऽयमन्तकमिव मां प्रति विगतभयः स्वयमागच्छति तदहो धैर्यं, सत्यवादिता चेति ॥४३–४४॥

स्थाने खल्वस्य विख्यातं सत्यवादितया यशः।
इति प्राणान्स्वराज्यं च सत्यार्थं योऽयमत्यजत् ॥४५॥

स्थान इति। अस्य सत्यवादितया यशः विख्यातमिति स्थाने योऽयं खलु, सत्यार्थमिति प्राणान् स्वराज्यं च अत्यजत् इत्यन्वयः।

अस्य राजर्षेः सत्यवादितया सत्यप्रियतया यशः कीर्तिः विख्यातं प्रसृतेति स्थाने युक्तमेव खलु, योऽयं सत्यार्थं प्रतिज्ञाऽनुपालनाय इत्येवं रीत्या प्राणान् स्वराज्यं राज्यसम्पदं च अत्यजत् तृणवत् तत्याज ॥४५॥

अथ बोधिसत्त्वः समभिगम्यैनं विस्मयबहुमानावर्जितमानसमुवाच—

प्राप्तं सुभाषितधनं प्रतिपूजितोऽर्थी
प्रीतिं मनश्च गमितं भवतः प्रभावात्।
प्राप्तस्तदस्म्यमशान यथेप्सितं मां
यज्ञाय वा मम पशुव्रतमादिश त्वम् ॥४६॥

प्राप्तमिति। भवतः प्रभावात् सुभाषितधनं प्राप्तं, अर्थी च प्रतिपूजितः, मनश्च प्रीतिं गमितं, तदयं प्राप्तोऽस्मि, यथेप्सितं मां अशान, त्वं यज्ञाय वा मम पशुव्रतमादिश इत्यन्वयः।

भवतः प्रभावात् तवानुग्रहेण सुभाषितं सूक्तिरेव धनं बहुमूल्यत्वात्, तत् प्राप्तमधिगतम्। अर्थी याचकजनश्च प्रतिपूजितः वांछितप्रदानेन सम्मानितः, मनो हृदयं च प्रीति सन्तोषं गमितं, तदयमहं प्राप्तोऽस्मि, उपस्थितोऽस्मि, यथेप्सितं यथेच्छं मां अशान शाधि, क्षपय वा। त्वं यज्ञाय नरमेधयागाय वा मम पशुवत् पशुत्वं आदिश सम्पादय ॥४६॥

सौदास उवाच—

नात्येति कालो मम खादितुं त्वां धूमाकुला तावदियं चितापि।
विधूमपक्वं पिशितं च हृद्यं शृण्मस्तदेतानि सुभाषितानि ॥४७॥

नात्येतीति। त्वां खादितुं मम कालो नात्येति, धूमाकुला इयं चिताऽपि तावत्, विधूमपक्वं पिशितं च हृद्यं (भवति), तदेतानि सुभाषितानि शृण्मः इत्यन्वयः।

अयं भावः—मम त्वद्भक्षणविधौ शीघ्रता नाऽस्ति, धूमाकुला चिता च वर्तते धूमरहितप्रदीप्ताग्निपक्वं मांसं च चारु भवति, अतस्तावत्कालपर्यन्तं तानि सुभाषितानि श्रावयेति भावः ॥४७॥

बोधिसत्त्व उवाच—कस्तवार्थ इत्थङ्गतस्य सुभाषितश्रवणेन।
गतस्य इमामवस्थां प्राप्तस्य।

इमामवस्थामुदरस्य हेतोः प्राप्तोऽसि सन्त्यक्तघृणः प्रजासु।
इमाश्च धर्मं प्रवदन्ति गाथाः समेत्यधर्मेण यतो न धर्मः ॥४८॥

इमामिति। प्रजासु संत्यक्तघृणः (सन्) त्वं उदरस्य हेतोरिमामवस्थां प्राप्तोऽसि, इमाश्च गाथाः धर्मं प्रवदन्ति, यतो धर्मः अधर्मेण न समेति इत्यन्वयः।

प्रजासु प्रजाजनविषये संत्यक्तघृणः निष्करुणः त्वं उदरस्य हेतोर्मांसभक्षणलौल्यात् इमामवस्थां दशां प्राप्तोऽसि, इमाश्च गाथाः सुभाषितानि धर्मं प्रवदन्ति वर्णयन्ति, यत हेतोर्धर्मः अधर्मेण न समेति न सहैकत्राऽवतिष्ठते ॥४८॥

रक्षोविकृतवृत्तस्य सन्त्यक्तार्यपथस्य ते।
नास्ति सत्यं कुतो धर्मः किं श्रुतेन करिष्यसि ? ॥४९॥

रक्षोविकृतेति। रक्षोविकृतवृत्तस्य संत्यक्तार्यपथस्य ते सत्यं (एव) नास्ति, धर्मः कुतः, श्रुतेन किं करिष्यसि ? इत्यन्वयः।

अयं भावः—उन्मार्गगामिनो राक्षससमाचरणस्य तव सत्यमपि नाऽस्ति, धर्मस्तु दूरे, ततः सुभाषितेन ते किं प्रयोजनम् ? इति ॥४९॥

अथ सौदासस्तामवसादनाममृष्यमाणः प्रत्युवाच—मा तावद्भोः—अवसादनां अवमाननाम् ।

कोऽसौ नृपः कथय यो न समुद्यतास्त्रः
क्रीडावने वनमृगीदयितान्निहन्ति ।
तद्वन्निहन्मि मनुजान्यदि वृत्तिहेतो-
राधर्मिकः किल ततोऽस्मि न ते मृगघ्नाः ॥५०॥

कोऽसाविति । कोऽसौ नृपः कथय ! समुद्यतास्त्रो यः क्रीडावने वनमृगीदयितान् न निहन्ति, तद्वत् यदि वृत्तिहेतोः मनुजान् निहन्मि, ततः किल ( अहं ) आधर्मिकोऽस्मि, ते मृगघ्नाः न ( सन्ति ) ? इत्यन्वयः ।

अर्थस्तु विशद एव । यथा मृगया व्याजेन राजानः पशून् मारयन्ति, एवमहं मनुजानपीति भावः ॥५०॥

बोधिसत्त्व उवाच—

धर्मे स्थिता न खलु तेऽपि नमन्ति येषां
भीतद्रुतेष्वपि मृगेषु शरासनानि ।
तेभ्योऽपि निन्द्यतम एव नराशनस्तु
जात्युच्छ्रिता हि पुरुषा न च भक्षणीयाः ॥५१॥

धर्मे इति । तेऽपि ( राजानः ) न खलु धर्मे स्थिताः, येषां भीतद्रुतेष्वपि मृगेषु शरासनानि नमन्ति, नराशनस्तु तेभ्योऽपि निन्द्यतम एव ( अस्ति ), हि जात्युच्छ्रिताः च पुरुषा न भक्षणीयाः ( भवन्ति ) इत्यन्वयः ।

अयं भावः—ये खलु राजानो भयपलायितानपि पशून् हन्तुमनु धावन्ति, न ते धार्मिका वक्तुमुचिताः, 'मा हिंस्यात् सर्वभूतानि' इति स्मरणात् । किन्तु नरभक्षको नराधमस्तु तेभ्योऽपि अधः पतित एवाऽस्ति । न खलु जातिकुलशीलवन्तः पुरुषा भक्ष्यतामर्हन्ति ॥५१॥

अथ सौदासः परिकर्कशाक्षरमप्यभिधीयमानो बोधिसत्त्वेन तन्मैत्रीगुणप्रभावादभिभूतरौद्रस्वभावः सुखायमान एव तद्वचनमभिप्रहस्योवाच—भोः सुतसोम !

तस्य मैत्रीगुणः सर्वभूतेषु स्नेहगुणः ।

मुक्तो मया नाम समेत्य गेहं समन्ततो राज्यविभूतिरम्यम् ।
यन्मत्समीपं पुनरागतस्त्वं न नीतिमार्गे कुशलोऽसि तस्मात् ॥५२॥

मुक्त इति । मया मुक्तो नाम समन्ततो राजविभूतिरम्यं गेहं समेत्य, यत् त्वं मत्समीपं पुनरागतः ( असि ) तस्मात् नीतिमार्गे कुशलो नाऽसि इत्यन्वयः ।

अयं भावः—मयैवं विसृष्टोऽपि भवान् सम्पदुपपन्नं भवनमवाप्याऽपि यदेवं पुनरागतवान्, तदेतत् भवतोऽविवेकचेष्टितं दृश्यते इति ॥ ५२ ॥

बोधिसत्त्व उवाच—नैतदस्ति । अहमेव तु कुशलो नीतिमार्गे यदेनं न प्रतिपत्तुमिच्छामि ।

यदेनं पन्थानमिति शेषः ।

यं नाम प्रतिपन्नस्य धर्मादैकान्तिकी च्युतिः ।
न तु प्रसिद्धिः सौख्यस्य तत्र किं नाम कौशलम् ॥५३॥

यं नामेति । यं ( नाम ) प्रतिपन्नस्य धर्मात् ऐकान्तिकी च्युतिः, न तु सौख्यस्य ( अपि ) प्रसिद्धिः किं नाम तत्र कौशलं ( वर्तते ) ? इत्यन्वयः ।

अयं भावः—यं कञ्चिदपि सत्यं प्रतिज्ञातवतो धीरस्य या खलु तस्य मिथ्याकरणेन धर्महानिर्जायते, यच्च सम्यक् मानसिकं सुखमपि न लभ्यते तत्रापि किं कौशलं भवति ? ॥५३॥

किञ्च भूयः ।

ये नीतिमार्गप्रतिपत्तिधीराः प्रायेण ते प्रेत्य पतन्त्यपायान् ।
अपास्य जिह्मानिति नीतिमार्गान्सत्यानुरक्षी पुनरागतोऽस्मि ॥५४॥

य इति । ये नीतिमार्गप्रतिपत्तिधीरा, ते प्रायेण प्रेत्य पतन्ति, ( अतः ) इति जिह्मान् अपायान् नीतिमार्गान् अपास्य, सत्यानुरक्षी ( अहं ) पुनरागतोऽस्मि, इत्यन्वयः ।

ये नीतिमार्गप्रतिपत्तिधीराः कूटनीतिचतुराः ते पुरुषाः प्रायेण बाहुल्येन प्रेत्य पतन्ति परलोके दुर्गतिं प्राप्नुवन्ति, अतः इत्येवंविधानसत्यमयानत एव जिह्मान् कुटिलान्, अपायान् नाशहेतून् नीतिमार्गान् अपास्य संत्यज्य, सत्यानुरक्षी सत्यरक्षार्थी इहाऽहं पुनरागतोऽस्मि, त्वां प्राप्तोऽस्मि ॥ ५४ ॥

अतश्च नीतौ कुशलोऽहमेव त्यक्त्वाऽनृतं योऽभिरतोऽस्मि सत्ये ।
न तत्सुनीतं हि वदन्ति तज्ज्ञा यन्नानुबध्नाति यशःसुखार्थान् ॥५५॥

अतश्चेति । अतश्च अहमेव नीतौ कुशलोऽस्मि, योऽहं अनृतं त्यक्त्वा सत्ये अभिरतोऽस्मि, हि तज्ज्ञाः न तत्सुनीतं वदन्ति, यत् यशःसुखार्थान् नाऽनुबध्नाति इत्यन्वयः ।

अत्रेदं तात्पर्यं—सत्यपरतया भवदपेक्षया ऽहमेव स्वात्मान कुशलं मन्ये, परिणामे यत् सुखकीर्तिजनकं तदेव विद्वांसः प्रशंसन्ति, नेतरत् इति ॥५५॥

सौदास उवाच—

प्राणान्प्रियान्स्वजनमश्रुमुखं च हित्वा
राज्याश्रयाणि च सुखानि मनोहराणि ।
कामर्थसिद्धिमनुपश्यसि सत्यवाक्ये
तद्रक्षणार्थमपि मां यदुपागतोऽसि ॥५६॥

प्राणानिति । प्रियान् प्राणान्, अश्रुमुखं स्वजनं, च राज्याश्रयाणि मनोहराणि सुखानि च, हित्वा सत्यवाक्ये कामर्थसिद्धिमनुपश्यसि, यत् तद्रक्षणार्थमपि मामुपागतोऽसि इत्यन्वयः ।

अयं भावः—स्वजीवनं बान्धवान् ऐश्वर्यं च परित्यज्य सत्यरक्षणे कं वाऽभ्युदयं पश्यसि, यदर्थमत्राऽऽयातोऽसि इति ॥५६॥

बोधिसत्त्व उवाच—बहवः सत्यवचनाश्रया गुणातिशयाः । संक्षेपस्तु श्रूयताम् ।

माल्यश्रियं ह्यद्यतयातिशेते सर्वान्रसान्स्वादुतया च सत्यम् ।
श्रमादृते पुण्यगुणप्रसिद्ध्या तपांसि तीर्थाभिगमश्रमांश्च ॥५७॥

माल्यश्रियमिति । सत्यं ( कर्तृ ) हृद्यतया माल्यश्रियं, स्वादुतया सर्वान् रसांश्च अतिशेते, श्रमात् ऋते पुण्यगुणप्रसिद्ध्या तपांसि तीर्थाभिगमांश्च ( अतिशेते ) इत्यन्वयः ।

सत्यं सत्यवचनं कर्तृ हृद्यतया मनोहरतया माल्यश्रियं कुसुमदामशोभां, स्वादुतया माधुर्यवत्तया सर्वान् षड्विधानपि रसांश्च अतिशेते विडम्बयति, श्रमादृते विनैव परिश्रमं पुण्यगुणप्रसिद्ध्या पवित्रगुणगणप्रख्यापनेन स्वर्गं प्राप्तिकारणीभूतानि

तपांसि तीर्थेष्वभिगमे गमने श्रमान् यासांश्च अतिशेते अधःकरोति । कीर्तेः स्वर्गसम्पादकत्वादिति भावः ॥५७॥

कीर्तेर्जगद्व्याप्तिकृतक्षणाया मार्गस्त्रिलोकाक्रमणाय सत्यम् ।
द्वारं प्रवेशाय सुरालयस्य संसारदुर्गोत्तरणाय सेतुः ॥५८॥

तदेवाह—कीर्तेरिति । सत्यं ( कर्तृ ) जगद्व्याप्तिकृतक्षणायाः कीर्तेस्त्रिलोकाक्रमणाय मार्गः ( अस्ति ), सुरालयस्य प्रवेशाय द्वारं, संसारदुर्गोत्तरणाय सेतुश्च ( अस्ति ) इत्यन्वयः ।

अयं भावः—सत्यवचनं त्रिलोकीमाक्रमितुमिच्छन्त्याः कीर्तेः प्रशस्तः पन्थाः, स्वर्गस्य प्रवेशद्वारं, संसारसमुद्रसंतरणाय सेतुबन्धश्च वर्तते इति । क्षणः उत्सवः । रूपकालङ्कारः ॥५८॥

अथ सौदासः साधु युक्तमित्यभिप्रणम्यैनं सविस्मयमभिवीक्षमाणः पुनरुवाच—

अन्ये नरा मद्वशगा भवन्ति दैन्यार्पणात्त्रासविलुप्तधैर्याः ।
सन्त्यज्यसे त्वं तु न धैर्यलक्ष्म्या मन्ये न ते मृत्युभयं नरेन्द्र ! ॥५९॥

अन्य इति । मद्वशगा अन्ये नराः दैन्यार्पणात् त्रासविलुप्तधैर्याः भवन्ति, त्वं तु धैर्यलक्ष्म्या न संत्यज्यसे ( अतः ) हे नरेन्द्र ! ते मृत्युभय न ( अस्ति ) इति मन्ये इत्यन्वयः ।

दैन्यार्पणात् आत्मनो दैन्यवशीकृतत्वात् । धैर्यलक्ष्म्या धैर्यमूलकेन अविकारेण । शेषं स्पष्टम् ॥५९॥

बोधिसत्त्व उवाच—

महताऽपि प्रयत्नेन यच्छक्यं नातिवर्तितुम् ।
प्रतीकारासमर्थेन भयक्लैब्येन तत्र किम् ॥६०॥

महताऽपीति । यत् महताऽपि प्रयत्नेन अतिवर्तितुं न शक्यं, तत्र प्रतीकाराऽसमर्थेन भयक्लैब्येन किं ? इत्यन्वयः ।

अयं भावः—यत् खलु महद्भिरपि प्रयत्नातिशयैरुल्लङ्घितुं न शक्यते, तत्र प्रतीकारशून्येन भयजनितेन दैन्येन किं वा स्यात् ? इति ॥६०॥

इति परिगणितलोकस्थितयोऽपि तु कापुरुषाः ।
इत्येवं परिगणितलोकस्थितयो विदितलोकव्यवहाराः ।

पापप्रसङ्गादनुतप्यमानाः शुभेषु कर्मस्वकृतश्रमाश्च ।
आशङ्कमानाः परलोकदुःखं मर्तव्यसंत्रासजडा भवन्ति ॥६१॥

पापप्रसङ्गादिति । पापप्रसङ्गादनुतप्यमानाः शुभेषु कर्मसु च अकृतश्रमाः, परलोकदुःखं आशङ्कमानाः मर्तव्यसन्त्रासजडाः भवन्ति इत्यन्वयः ।

कापुरुषास्तावत् पापप्रसङ्गात् पुराकृतविविधपातकस्मरणेन अनुतप्यमानाः दह्यमानाः, शुभेषु पुण्येषु कर्मसु ईश्वराराधनधर्माचरणादिषु च अकृतश्रमाः अकृताभ्यासाः, परलोकदुःखं नरकादिरूपं आशङ्कमानाश्च ( सन्तः ) मर्तव्यस्य मरणस्य संत्रासेन जडाः स्तब्धा इव भवन्ति ॥६१॥

तदेव कर्तुं न तु संस्मरामि भवेद्यतो मे मनसोऽनुतापः ।
सात्मीकृतं कर्म च शुक्लमस्माद्धर्मे स्थितः को मरणाद् बिभीयात ॥६२॥

तदेवेति । यतो मे मनसोऽनुतापः भवेत् तदेव (कर्म) तु कर्तुं न संस्मरामि, शुक्लं कर्म च सात्मीकृतं, अस्माद् धर्मस्थितः कः मरणात् बिभीयात् ? इत्यन्वयः ।

यतो मे मनसोऽनुतापो भवेत्, येन वा मम पश्चात्तापो जायेत, तदेव कर्म तु कर्तुं न संस्मरामि, तादृक्कर्म किमपि मया स्वेन कृतं न स्मर्यते, शुक्लं कर्म पुण्यानि कार्याणि च सात्मीकृतं अभ्यस्तं बहुशोऽनुष्ठितानि, अस्माद्धेतोः कः ( मादृशः ) मरणात् बिभीयात भयं प्राप्नुयात् ? ॥६२॥

न च स्मराम्यर्थिजनोपयानं यन्न प्रहर्षाय ममार्थिनां वा ।
इति प्रदानैः समवाप्ततुष्टिर्धर्मे स्थितः को मरणाद् बिभीयात् ॥६३॥

न चेति । यत् मम अर्थिनां वा प्रहर्षाय न ( तत् ) अर्थिजनोपयानं च न स्मरामि, इति प्रदानैः समवाप्ततुष्टिर्धर्मे स्थितः कः मरणात् बिभीयात् इत्यन्वयः ।

अयं भावः—स्वस्याऽर्थिनो वाऽपरितोषकृत् प्रत्याख्यानं तु मया कदापि कृतं न स्मर्यते, अतो दानतुष्टो मादृशः को मृत्योर्भयमाप्नुयात् ? ॥

चिरं विचिन्त्यापि च नैव पापे मनःपदन्यासमपि स्मरामि ।
विशोधितस्वर्गपथोऽहमेवं मृत्योः किमर्थं भयमभ्युपेयाम् ॥६४॥

चिरमिति । चिरं विचिन्त्याऽपि च पापे मनःपदन्यासमपि नैव स्मरामि, एवं विशोधितस्वर्गपथोऽहं किमर्थं मृत्योर्भयमभ्युपेयाम् ? इत्यन्वयः ।

चिरं विचिन्त्याऽपि च बहुकालं विमृश्याऽपि च पापे कर्मणि मनसश्चेतसः

पदन्यासं अभिमुखीभावमपि तावन्नैव स्मरामि, एवमनया रीत्या विशोधितः सुलभः कृतः स्वर्गपथः स्वर्गमार्गो येन तादृशोऽहं किमर्थं किमिति मृत्योः सकाशात् भयमभ्युपेयां प्राप्नुयाम् इति ॥६४॥

विप्रेषु बन्धुषु सुहृत्सु समाश्रितेषु दीने जने यतिषु चाश्रमभूषणेषु ।
न्यस्तं मया बहुधनं ददता यथार्हं कृत्यं च यस्य यदभूत्तदकारि तस्य ॥६५॥

विप्रेष्विति । विप्रेषु बन्धुषु सुहृत्सु समाश्रितेषु दीने जने आश्रमभूषणेषु यतिषु च ददता मया यथार्हं बहुधनं न्यस्तं, यस्य च यत् कृत्यमभूत् तस्य तदकारि इत्यन्वयः ।

अयं भावः—सर्वत्र सुपात्रेषु यथेच्छं दानमाचरता परोपकारं च विदधता मया किमपि सुकृतमुपार्जितमेवेति ॥६५॥

श्रीमन्ति कीर्तनशतानि निवेशितानि
सत्राजिराश्रमपदानि सभाः प्रपाश्च ।
मृत्योर्न मे भयमतस्तदवाप्ततुष्टे-
र्यज्ञाय तत्समुपकल्पय भुङ्क्ष्व वा माम् ॥६६॥

श्रीमन्तीति । श्रीमन्ति कीर्तनशतानि निवेशितानि, सत्राजिराश्रमपदानि सभाः प्रपाश्च (निवेशिताः) अतस्तदवाप्ततुष्टेर्मे मृत्योर्भयं न, तन्मां यज्ञाय समुपकल्पय भुङ्क्ष्व वा इत्यन्वयः ।

श्रीमन्ति समृद्धिमन्ति कीर्तनशतानि धर्मार्थं वासभवनानि (मया) निवेशितानि निर्मापितानि (सन्ति), सत्राजिराणि यज्ञप्राङ्गणानि, आश्रमपदानि यतिजनाश्रमाः सभाः शालाः, प्रपाः पानीयशालिकाश्च मया निवेशिताः सन्तीति शेषः । अतस्तस्मात्कर्मणोऽवाप्ततुष्टेर्मे मम मृत्योर्भयं न, नाऽस्ति, तत्तस्मान्मां यज्ञार्थं समुपकल्पय स्थापय भुङ्क्ष्व वा स्वयमेव वा भक्षयेति ॥६६॥

तदुपश्रुत्य सौदासः प्रसादाश्रुव्याप्तनयनः समुद्भिद्यमानरोमाञ्चपिटको विस्मृतपापस्वभावतामिस्रः सबहुमानमवेक्ष्य बोधिसत्त्वमुवाच—शान्तं पापम् ।

समुद्भिद्यमानः उत्पद्यमानः रोमाञ्चपिटको रोमाञ्चपुञ्जं यस्य सः । तामिस्रमन्धकारः ।

अद्याद्विषं स खलु हालहलं प्रजान-
न्नाशीविषं प्रकुपितं ज्वलदायसं वा ।
मूर्धाऽपि तस्य शतधा हृदयं च याया-
द्यस्त्वद्विधस्य नृपपुङ्गव ! पापमिच्छेत् ॥६७॥

अद्यादिति । हे नृपपुङ्गव ! यः खलु प्रजाजन् ( अपि ) त्वद्विधस्य पाप-मिच्छेत् स खलु हालहलं विषं, प्रकुपितमाशीविषं, ज्वलदायसं वा अद्यात्, तस्य मूर्धाऽपि हृदयं च शतधा यायात् इत्यन्वयः ।

अयं भावः—हे राजमणे ! यस्तव योग्यतां जानानोऽपि तवानिष्टमभिलषेत्, स नराधमो हालहलं रुष्टं कालसर्पं ज्वलल्लोहं वा अश्नीयात्, तस्य मस्तकं हृदयं च शतधा शकलीभूय पतेदिति ॥६७॥

तदर्हति भवांस्तान्यपि मे सुभाषितानि वक्तुम् । अनेन हि ते वचन-कुसुमवर्षेणाभिप्रसादितमनसः सुष्ठुतरमभिवृद्धं च तेषु मे कौतूहलम् । अपि च भोः ।

दृष्ट्वा मे चरितच्छायावैरूप्यं धर्मदर्पणे ।
अपि नामागतावेगं स्यान्मे धर्मोत्सुकं मनः ॥६८॥

दृष्ट्वेति । धर्मदर्पणे मे चरितच्छायावैरूप्यं दृष्ट्वा, आगतावेगं मे मनः अपि नाम धर्मोत्सुकं स्यात् ? इत्यन्वयः ।

धर्म एव दर्पण आदर्शस्तत्र मे मम चरितमाचरणं तस्य च्छाया प्रतिबिम्बं तत्र यद्वैरूप्य कुरूपता तां दृष्ट्वा अवलोक्य आत्मनो दोषान् विमृश्येत्यर्थः । आगतः सञ्जातः आवेगः अनुतापः यस्य तत् तादृशं मे मनः अपि नाम धर्मोत्सुकं स्यात्, कदाचित् धर्माभिमुखं भवेत् ? ॥६८॥

अथैनं बोधिसत्त्वः पात्रीकृताशयं धर्मश्रवणप्रवणमानसमवेत्योवाच—तेन हि धर्मार्थिना तदनुरूपसमुदाचारसौष्ठवेन धर्मः श्रोतुं युक्तम् । पश्य ।

पात्रीकृतः विशदः कृतः आशयो हृदयं तेन तम् । तदनुरूपेति धर्मानुरूपेत्यर्थः ।

नीचैस्तरासनस्थानाद्विबोध्य विनयश्रियम् ।
प्रीत्यर्पितास्यां चक्षुर्भ्यां वाङ्मयं ... ॥६९॥

गौरवावर्जितैकाग्रप्रसन्नामलमानसः ।
सत्कृत्य धर्मं शृणुयाद्भिषग्वाक्यमिवातुरः ॥७०॥

नीचैरिति । गौरवेति । नीचैस्तराऽऽसनस्थानात् विनयश्रियं विबोध्य, प्रीत्यर्पिताभ्यां चक्षुर्भ्यां वाङ्मधु आस्वादयन्निव गौरवावर्जितैकाग्रप्रसन्नाऽमलमानसः (शुश्रूषुर्जनः), आतुरो भिषग्वाक्यमिव सत्कृत्य धर्मं शृणुयात् इत्यन्वयः ।

अयं भावः—धर्मं शुश्रूषुर्जनः निम्नतरे आसने समुपविष्टः सविनयाकृतिः, प्रीतिनिश्चलाभ्यां नयनाभ्यां आचार्यमुखाम्बुजनिष्यन्द वाङ्मयमधु मिलिन्दवत् रसयन्निव स्थितः, गुरौ गौरवेण स्थिरतरैकतानर्निर्मलमानसः (सन्) रोगातुरो वैद्यवचनमिव आचार्ये सत्कृत्य तद्वचनं शृणुयादिति ॥६९—७०॥

अथ सौदासः स्वेनोत्तरीयेण समास्तीर्योच्चैस्तरं शिलातलं तत्र चाधिरोप्य बोधिसत्त्वं स्वयमनास्तरितायामुपविश्य भूमौ बोधिसत्त्वस्य पुरस्तात्दाननोद्वीक्षणव्यापृतनिरीक्षणस्तं महासत्त्वमुवाच—ब्रूहीदानीं मार्षेति ॥ अथ बोधिसत्त्वो नवाम्भोधरनिनदमधुरेण गम्भीरेणाऽऽपूरयन्निव तद्वनं व्यापिना स्वरेणोवाच—

समास्तीर्य आच्छाद्य ।

यदृच्छयाप्युपानीतं सकृत्सज्जनसङ्गतम् ।
भवत्यचलमत्यन्तं नाभ्यासक्रममीक्षते ॥७१॥

यदृच्छयेति । प्रथममिदं सुभाषितम् । यदृच्छयाऽपि सकृत् उपानीतं सज्जनसङ्गत अत्यन्तं अचलं भवति, अभ्यासक्रमं न ईक्षते इत्यन्वयः ।

यदृच्छया अप्रयत्नेनाऽपि सकृदेकवारमपि उपानीतं सञ्जातं सज्जनसङ्गतं साधुसमागमः अत्यन्तं अतिशयेन अचलं स्थिरपरिणाम भवति, अभ्यासक्रमं पौनःपुन्यं नेक्षते नाऽपेक्षते । एकवारं जातोऽपि साधुसमागमः शाश्वतिककल्याणाय भवति इति भावः ॥७१॥

तदुपश्रुत्य सौदासः साधु साध्विति स्वशिरः प्रकम्प्याङ्गुलीविक्षेपं बोधिसत्त्वमुवाच—ततस्ततः—



अङ्गुलीविक्षेपं च कृत्वेति शेषः ।

अथ बोधिसत्त्वो द्वितीयां गाथामुदाजहार—

न सज्जनाद्दूरचरः क्वचिद्भवेद्भजेत साधून्विनयक्रमानुगः ।
स्पृशन्त्ययत्नेन हि तत्समीपगं विसर्पिणस्तद्गुणपुष्परेणवः ॥७२॥

न सज्जनादिति । क्वचित् ( अपि ) सज्जनात् दूरचरो न भवेत्, विनयक्रमानुगः ( सन् ) साधून् भजेत, हि तत्समीपगं विसर्पिणस्तद्गुणपुष्परेणवः अयत्नेन स्पृशन्ति इत्यन्वयः ।

इदमत्र तात्पर्यं—विनयनम्रेण श्रेयस्कामेन सर्वदा साधुसन्निहितेन भाव्यं, यतः सन्निधानादेव कतिचित् तद्गुणकुसुमपरागकणाः स्वस्मिन्निपतेयुः, तेन च कल्याणं भवेदिति ॥७२॥

सुभाषितान्यर्चयता साधो ! सर्वात्मना त्वया ।
स्थाने खलु नियुक्तोऽर्थः स्थाने नावेक्षितः श्रमः ॥७३॥

सुभाषितानीति । हे साधो ! सुभाषितान्यर्चयता त्वया सर्वात्मना अर्थः स्थाने नियुक्तः खलु स्थाने च श्रमो नाऽवेक्षितः इत्यन्वयः ।

हे साधो ! सुभाषितानि सूक्तीः अर्चयता सम्मानयता त्वया सर्वात्मना सर्वथा अर्थो द्रव्यराशिः स्थाने योग्ये वस्तुनि नियुक्तो निहितः खलु स्थाने च युक्तं चैतद् यत् श्रमः परिश्रमोऽपि नाऽवेक्षितः सोढः ॥७३॥

ततस्ततः । बोधिसत्त्व उवाच—

रथा नृपाणां मणिहेमभूषणा व्रजन्ति देहाश्च जराविरूपताम् ।
सतां तु धर्मं न जराभिवर्तते स्थिरानुरागा हि गुणेषु साधवः ॥७४॥

रथा इति । मणिहेमभूषणाः नृपाणां रथाः देहाश्च जराविरूपतां व्रजन्ति, सतां धर्मं तु जरा न अभिवर्तते, हि गुणेषु साधवः स्थिरानुरागाः ( भवन्ति ) इत्यन्वयः ।

मणयो हेम सुवर्णं च तत्कृतानि भूषणान्यलङ्काराः येषु ते मणिहेमभूषणाः नृपाणां राजश्रेष्ठानां रथाः, देहाः कलेवराणि च जरया वार्धक्येन विरूपतां पलितत्वं जर्जरतां वा व्रजन्ति प्रयान्ति, सतां धर्मं तु साधुजनानां धर्मस्थितिं तु जरा न अभिवर्तते नाऽभियाति, हि यतः गुणेषु धर्मानुबन्धिषु साधवः सज्जनाः स्थिरानुरागाः दृढचेतसो भवन्ति ॥७४॥

अमृतवर्षं खल्विदम्। अहो सन्तर्पिताः स्मः। ततस्ततः।

अमृतं पीयूषं वर्षतीति तथा। आह्लादजनकमित्यर्थः।

बोधिसत्त्व उवाच—

नभश्च दूरे वसुधातलाच्च पारादवारं च महार्णवस्य।
अस्ताचलेन्द्रादुदयस्ततोऽपि धर्मः सतां दूरतरेऽसतां च ॥७५॥

नभश्चेति। वसुधातलात् च नभः दूरे महार्णवस्य पारादवारं च, अस्ताचलेन्द्रात् उदयश्च (दूरे), एवं ततोऽपि धर्मः सतां असतां च दूरतरे (स्थितः) इत्यन्वयः।

वसुधातलात् भूतलात् च नभः व्योम दूरे, (वर्तते) महार्णवस्य महासमुद्रस्य पारात्तीरात् अवारं अपरतीरं च दूरे वर्तत इति शेषः। अस्ताचलेन्द्रात् अस्तपर्वतात् उदयः पूर्वपर्वतः दूर एव। एवं ततोऽपि अधिक धर्मः सतां साधूनामसताम-सज्जनानां च दूरे वर्तते इति शेषः।

अयं भावः—आकाशादिवद्दूरे वर्तमानोऽपि परमावश्यको धर्मः साधुभिः सेव्यते, इतरैस्तु तिरस्क्रियते, तत्र दृष्टिदोष एव कारणमिति ॥७५॥

अथ सौदासः प्रसादविस्मयाभ्यामावर्जितप्रेमबहुमानो बोधिसत्त्वमुवाच—

चित्राभिधानातिशयोज्ज्वलार्था गाथास्त्वदेता मधुरा निशम्य।
आनन्दितस्तत्प्रतिपूजनार्थं वरानहं ते चतुरो ददामि ॥७६॥

चित्राभिधानेति। चित्राभिधानाऽतिशयोज्ज्वलार्थाः मधुराः एताः गाथाः त्वत् निशम्य, आनन्दितोऽहं तत्प्रतिपूजनार्थं चतुरो वरान् ते ददामि इत्यन्वयः। विचित्रोत्कर्षणोपास्त्वन्मुखदेताः सूक्तीः समाकर्ण्य प्रहृष्टोऽहं वरचतुष्टयं भवते प्रयच्छामि इति भावः ॥७६॥

तद्वृणीष्व। यद्यन्मत्तोऽभिकाङ्क्षसीति। अथैनं बोधिसत्त्वः सविस्मयबहुमान उवाच—कस्त्वं वरप्रदानस्य।

कः कः समर्थः?।

यस्यात्मनो नास्त्यपि ते प्रभुत्वमकार्यसंरागपराजितस्य।
स त्वं परं ... कं परस्मै शुभप्रवृत्तेरपवृत्तभावः ॥७७॥

यस्येति । अकार्यसंरागपराजितस्य यस्य ते आत्मन्यपि प्रभुत्वं नाऽस्ति, शुभ-प्रवृत्तेरपवृत्तभावः स त्वं परस्मै कं वरं दास्यसि ? इत्यन्वयः ।

अयं भावः—अकार्योपरक्तचेतसो यस्य ते स्वात्मनः पशुवृत्तिं शमयितुमपि सामर्थ्यं नास्ति, स त्वमशुभकर्मनिरतो मह्यं कं नु वरं दास्यसि ॥७७॥

अहं च देहीति वरं वदेयं मनश्च दित्साशिथिलं तव स्यात् ।
तमत्ययं कः सघृणोऽभ्युपेयादेतावदेवाऽलमलं यतो नः ॥७८॥

अहं चेति । ( यदि ) अहं च 'देहि' इति वरं वदेयं, तव मनश्च दित्साशिथिलं स्यात्, ( तर्हि ) कः सघृणो ( जनः ) तमत्ययमभ्युपेयात् ? यतो नः एतावदेव अलमलम् इत्यन्वयः ।

यदि अहं याचको नाम भूत्वा 'देहि' इति वरं त्वत्तो वदेयं प्रार्थयेयं, तव मनश्च कर्तृ मद्विषये दित्सया दानेच्छया शिथिलं मृदु च स्यात्, ( तर्हि ) कः सघृणः सकरुणो जनस्तमेनमत्ययमनुचितं व्यवसायमभ्युपेयादङ्गीकुर्यात् ? । यतो नोऽस्माक एतावदेव इत्युक्त्वा वचनमाक्षिपति अलमलं न बहुनोक्तेन प्रयोजन-मिति ॥७८॥

अथ सौदासः किञ्चिद्व्रीडावनतवदनो बोधिसत्त्वमुवाच—अलमत्र भवतो मामेवं विशङ्कितुम् ।

प्राणानपि परित्यज्य दास्यामि तानहं वरान् ।
विस्रब्धं तद्वृणीष्व त्वं यद्यदिच्छसि भूमिप ! ॥७९॥

प्राणानपीति । प्राणानपि परित्यज्य तान् वरानहं दास्यामि, हे भूमिप ! यद्य-दिच्छसि तत् त्वं विस्रब्धं वृणीष्व इत्यन्वयः ।

अर्थोऽपि स्फुट एव ॥७९॥

बोधिसत्त्व उवाच—तेन हि ।

सत्यव्रतो भव विसर्जय सत्त्वहिंसां
बन्दीकृतं जनमशेषमिमं विमुञ्च ।
अद्या न चैव नरवीर ! मनुष्यमांस-
मेतान्वराननवरांश्चतुरः प्रयच्छ ॥८०॥

सत्यव्रत इति । हे नरवीर ! सत्यव्रतो भव, सत्त्वहिंसां विसर्जय, बन्दीकृतम-

शेषमिमं जनं विमुञ्च, मनुष्यमांसं चैव न अद्याः, एताननवरान् चतुरो वरान्
प्रयच्छेत्यन्वयः ।

हे वीरचूडामणे ! सत्यं पालय, प्राणिहिंसां त्यज, निगडितमेनं जनसमुदायं
विमुञ्च, नरमांसं च न भक्षय एतानेवोत्तमांश्चतुरो वरान् मह्यं प्रयच्छेति भावः ॥८०॥

सौदास उवाच—

दद्ामि पूर्वान्भवते वरांस्त्रीनन्यं चतुर्थं तु वरं वृणीष्व ।
त्वमिदं नावैषि किं न यथाऽहमीशो विरन्तुं न मनुष्यमांसात् ॥८१॥

दद्ामीति । पूर्वान् त्रीन् वरांस्तु भवते ददामि, चतुर्थं तु अन्यं वरं वृणीष्व,
त्वमिदं नाऽवैषि किं यथाऽहं मनुष्यमांसात् विरन्तुं न ईशोऽस्मि, इत्यन्वयः ।

पूर्वान् पूर्वोक्तान् त्रीन् वरान् सत्यभाषणादिरूपान् तु भवते ददामि, चतुर्थं
तुरीयं तु अन्यं भिन्नं वरं वृणीष्व प्रार्थय, त्वमिदं नावैषि किं न जानासि किं यथाऽहं
जातिस्वभावदोषपरवशः मनुष्यमांसात् तद्भक्षणादित्यर्थः । विरन्तुं पराङ्मुखो
भवितुं न ईशः न समर्थोऽस्मि ॥८१॥

बोधिसत्त्व उवाच । हन्त तवैतत्संवृत्तं ननूक्तं मया कस्त्वं वरप्रदान-
स्येति । अपि च भोः !

सत्यव्रतत्वं च कथं स्यादहिंसकता च ते ।
अपरित्यजतो राजन्मनुष्यपिशिताशिताम् ॥८२॥

सत्यव्रतत्वं चेति । हे राजन् ! मनुष्यपिशिताशितामपरित्यजतस्ते सत्यव्रत-
त्वं अहिंसकता च कथं स्यात् ? इत्यन्वयः ।

नरमांसाशित्वमनुज्झतस्तव सत्यपालनमहिंसा चैतदुभयमनुपपन्नमिति भावः ।

आह—

ननूक्तं भवता पूर्वं दास्यामेतानहं वरान् ।
प्राणानपि परित्यज्य तदिदं जायतेऽन्यथा ॥८३॥
अहिंसकत्वं च कुतो मांसार्थं ते घ्नतो नरान् ।
सत्येवं कतमे दत्ता भवता स्युर्वरास्त्रयः ॥८४॥

आह = पुनरपि बभाषे । ननूक्तमिति । अहिंसकत्वं चेति । भवता पूर्वमुक्तं
प्राणानपि परित्यज्य एतानहं वरान् दास्यामि, तदिदं (अधुना)

मनु ( यत् )

११

अन्यथा जायते। मांसार्थं नरान् अतस्ते अहिंसकत्वं च कुतः? एवं च सति, कतमे अथो वराः भवता दत्ता स्युः इत्यन्वयः।

त्वया पूर्वं तावदिदं प्रतिज्ञातं यत् प्राणानपि परित्यज्य वरानहं दास्यामीति, तच्च तवोक्त्यैव विरुद्ध्यते, यतो नरमांसत्यागं विना अहिंसैव न स्यात्। एवं च ये त्वया दीयन्ते तेऽपि वरा बाधिता भवन्ति एवेति भावः ॥८३-८४॥

सौदास उवाच—

त्यक्त्वा राज्यं वने क्लेशो यस्य हेतोर्धृतो मया।
हतो धर्मः क्षता कीर्तिस्त्यक्ष्यामि तदहं कथम् ॥८५॥

त्यक्त्वेति। राज्यं त्यक्त्वा यस्य हेतोर्मया वने क्लेशो धृतः, धर्मोऽपि हतः, कीर्तिश्च क्षता, तदहं कथं त्यक्ष्यामि इत्यन्वयः।

राज्यं राज्यसंपदं त्यक्त्वा, यस्य हेतोर्यस्य कृते मया वने वासरूपः क्लेशः आवासः धृतोऽङ्गीकृतः, धर्मोऽपि हतस्तिरस्कृतः, कीर्तिर्यशश्च क्षता नाशिता, तदहं मनुष्यमांसभक्षणं कथं त्यक्ष्यामि त्यक्तुं शक्नुयाम्? इति ॥८५॥

बोधिसत्त्व उवाच—अत एव तद्भवांस्त्यक्तुमर्हति।

अत एव अनर्थहेतुत्वादेव।

धर्मादर्थात्सुखात्कीर्तेर्भ्रष्टो यस्य कृते भवान्।
अनर्थायतनं तादृक्कथं न त्यक्तुमर्हसि ॥८६॥
दत्तानुशयिता चेयमनौदार्यहते जने।
नीचता सा कथं नाम त्वामप्यभिभवेदिति ॥८७॥

धर्मादिति। दत्तेति। यस्य कृते भवान् धर्मात्, अर्थात्, सुखात्, कीर्तेश्च, भ्रष्टः (अभूत्) तादृक् अनर्थायतनं कथं न त्यक्तुमर्हसि? अनौदार्यहते जने दत्ता चेयं अनुशयिता, सा नीचता च कथं नाम त्वामपि इति अभिभवेत्? इत्यन्वयः।

अयं भावः—यन्नरमांसभक्षणं कुर्वन् भवान् धर्मार्थसुखकीर्तिरहितोऽभूत्, तादृगनर्थास्पदं तन्न त्यक्तव्यं किम्? किंच—अनुदारचरिते पामरजने दृश्यमाना सेयं पश्चात्तापशीलता नीचता च त्वामपि सत्कुलीन अभिभवतीत्यसाम्प्रतम् ॥८६-८७॥

तदलं ते पाप्मानमेवानुभ्रमितुम्। अवबोद्धुमर्हस्यात्मानम्। सौदासः खल्वयं भवान्।

अनुभ्रमितुं = अनुसर्तुम् । अत्र भवान् इति प्रयोक्तव्यम् ।

वैद्येक्षितानि कुशलैरुपकल्पितानि
ग्राम्याण्यनूपजलजान्यथ जाङ्गलानि ।
मांसानि सन्ति कुरु तैर्हृदयस्य तुष्टिं
निन्दावहाद्विरम साधु मनुष्यमांसात् ॥८८॥

वैद्येक्षितानीति । वैद्येक्षितानि कुशलैरुपकल्पितानि, अथ ग्राम्याणि अनूपजलजानि जाङ्गलानि च मांसानि सन्ति, तैर्हृदयस्य तुष्टिं कुरु, निन्दावहात् मनुष्यमांसात् साधु विरम इत्यन्वयः ।

वैद्येक्षितानि वैद्यैर्दुष्टाऽदुष्टतया निर्णीतानि कुशलैः पाचकादिभिरुपकल्पितानि कृतानि, अथ ग्राम्याणि ग्रामेषु लभ्यानि अनूपजलजानि जलप्रायप्रदेशेषु तडागादिषु लभ्यानि, जाङ्गलानि वन्यानि ( वराहादीनाम् ) च मांसानि सन्ति तैरेव स्वहृदयस्य तुष्टिं सन्तोषं कुरु, निन्दावहात् उभयलोकगर्हणीयात् मनुष्यमांसात् साधु सम्यक् विरम पराङ्मुखो भव ॥८८॥

तूर्यस्वनान्सजलतोयदनादधीरान् गीतस्वनं च निशि राज्यसुखं च तत्तत् ।
बन्धून्सुतान्परिजनं च मनोऽनुकूलं हित्वा कथं नु रमसेऽत्र वने विविक्ते ॥

तूर्यस्वनानिति । सजलतोयदनादधीरान् तूर्यस्वनान्, निशि गीतस्वनं च, तत्तत् राज्यसुखं च, बन्धून् सुतान्, मनोऽनुकूलं परिजनं च, हित्वा अत्र विविक्ते वने कथं नु रमसे ? इत्यन्वयः ।

अयं भावः—गीतवादित्रादि ललितविलासं, बन्धुपरिजनादींश्च परित्यज्य वृथैवाऽत्र विजने विपिने कालं क्षपयतस्ते मनो न व्यथते किं ? इति ॥८९॥

चित्तस्य नार्हसि नरेन्द्र ! वशेन गन्तुं
धर्मार्थयोरनुपरोधपथं भजस्व ।
एको नृपान्युधि विजित्य समस्तसैन्या-
न्मा चित्तविग्रहविधौ परिकातरो भूः ॥९०॥

चित्तस्येति । हे नरेन्द्र ! चित्तस्य वशेन गन्तुं नाऽर्हसि, धर्मार्थयोः अनुपरोधपथं भजस्व, एकः ( त्वं ) युधि समस्तसैन्यान् नृपान् विजित्य, चित्तविग्रहविधौ परिकातरो मा भूः, इत्यन्वयः ।

हे नरेन्द्र! राजन्! चित्तस्य वशेन गन्तुं मनसो वशे भवितुं नार्हसि न योग्योऽसि, धर्मार्थयोरनुपरोधपथं अविरोधिनं मार्गं भजस्व, एकोऽपि त्वं युधि संग्रामे समस्तसैन्यान् प्रबलबलपरिवृतान् नृपान् विजित्य वशीकृत्य चित्तस्य एकलस्यैव विग्रहविधौ दमने परिकातरोऽसमर्थः मा भूः न भवेः ॥९०॥

लोकः परोऽपि मनुजाधिप! नन्ववेक्ष्य-
स्तस्मात्प्रियं यदहितं च न तन्निषेव्यम्।
यत्स्यात्तु कीर्त्यनुपरोधि मनोज्ञमार्गं
तद्विप्रियं सदपि भेषजवद्भजस्व ॥९१॥

लोक इति। हे मनुजाधिप! परोऽपि लोकः अवेक्ष्यः ननु, तस्मात् यत् प्रियं अहितं च तन्न निषेव्यं, यत्तु कीर्त्यनुपरोधि, मनोज्ञमार्गं च स्यात्, तद्विप्रियं सदपि भेषजवत् भजस्व इत्यन्वयः।

अयं भावः—हे राजमणे! परलोकं विचिन्तयता जनेन प्रियमपि अहितं वस्तु त्यक्तुमुचितं, यत्तु यशस्यं मनोज्ञं विद्भिराहतं च तत्कठोरमपि भेषजवत्सेव्यमेवेति। उपमालङ्कारः ॥९१॥

अथ सौदासः प्रसादाश्रुव्याप्तनयनो गद्गदायमानकण्ठः समभिसृत्येव बोधिसत्त्वं पादयोः सम्परिष्वज्योवाच—

गद्गदेति बाष्पावरुद्धकण्ठः। सम्परिष्वज्य आलिङ्गय।

गुणकुसुमरजोभिः पुण्यगन्धैः समन्ता-
ज्जगदिदमवकीर्णं शोभनैस्त्वद्यशोभिः।
इति विचरति पापे मृत्युदूतोग्रवृत्तौ
त्वमिव हि क इवान्यः सानुकम्पो मयि स्यात् ॥९२॥

गुणकुसुमेति। पुण्यगन्धैः गुणकुसुमरजोभिः शोभनैस्त्वद्यशोभिः समन्तात् जगदिदमवकीर्णं, इति विचरति मृत्युदूतोग्रवृत्तौ पापे मयि त्वमिव हि क इवाऽन्यः सानुकम्पः स्यात् ? इत्यन्वयः।

पुण्यगन्धैः पूतपरिमलैः गुणाः दयादाक्षिण्यादय एव कुसुमानि तेषां रजोभिः परागैरिव, शोभनैस्त्वद्यशोभिः कीर्तिप्रसारैः समन्तात् सर्वतो जगदिदं अवकीर्णं व्याप्तमपि, इत्येवं विचरति स्वैरं भ्रमति मृत्युदूतोग्रवृत्तौ यमदूतकल्पे पापेऽस्मिन्

मयि त्वामिव हीति निश्चये क इवाऽन्यः जनः सानुकम्पः सकरुणः स्यात् ?
मालिनीवृत्तम् ॥९२॥

शास्ता गुरुश्च मम दैवतमेव च त्वं
मूर्ध्ना वचांस्यहममूनि तवार्चयामि ।
भोक्ष्ये न चैव सुतसोम मनुष्यमांसं
यन्मां यथा वदसि तच्च तथा करिष्ये ॥९३॥

शास्तेति । त्वं मम शास्ता, गुरुश्च, दैवतमेव च ( असि ), अहममूनि तव वचांसि मूर्ध्ना अर्चयामि, हे सुतसोम ! मनुष्यमांसं चैव न भोक्ष्ये, मां यथा यत् वदसि तथा च तत् करिष्ये, इत्यन्वयः ।

अर्थोऽपि स्फुट एव । शास्ता शासकः । सर्वथा तवाऽऽश्रवतां गतोऽस्मीति भावः ॥९३॥

नृपात्मजा यज्ञनिमित्तमाहृता मया च ये बन्धनखेदपीडिताः ।
हतत्विषः शोकपरीतमानसास्तदेहि मुञ्चाव सहैव तानपि ॥९४॥

हतत्विषः शोकपरीतमानसास्तदेहि मुञ्चाव सहैव तानपि ॥९४॥ ये च मया यज्ञनिमित्तमाहृताः बन्धनखेदपीडिताः नृपात्मजा इति । ये च मया यज्ञनिमित्तमाहृताः बन्धनखेदपीडिताः हतत्विषः शोकपरीतमानसाश्च नृपात्मजाः ( सन्ति ) तदेहि तानपि सहैव मुञ्चाव इत्यन्वयः ।

ये च मया यज्ञनिमित्तं भूतयज्ञार्थमाहृताः अपहृत्य आनीताः बन्धनखेदेन शृङ्खलाबन्धे पीडिताः हतत्विषो मलिनाकृतयः शोकपरीतमानसाः शोकाग्निदह्यमानाश्च नृपात्मजा राजपुत्राः सन्ति, तदेहि आगच्छ, सहैव तानपि मुञ्चाव आवां बन्धनाद् मोचयावः ॥९४॥

अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य यत्र ते नृपसुतास्तेनावरुद्धास्तत्रैवाभिजगाम । दृष्ट्वैव च ते नृपसुताः सुतसोमं हन्त मुक्ता वयमिति परं हर्षमुपजग्मुः ।

विरेजिरे ते सुतसोमदर्शनान्नरेन्द्रपुत्राः स्फुटहासकान्तयः ।
शरन्मुखे चन्द्रकरोपबृंहिता विजृम्भमाणाः कुमुदाकरा इव ॥९५॥

विरेजिरे इति । शरन्मुखे चन्द्रकरोपबृंहिताः विजृम्भमाणाः कुमुदाकरा इव, सुतसोमदर्शनात् स्फुटहासकान्तयस्ते नरेन्द्रपुत्राः विरेजिरे इत्यन्वयः ।

शरन्मुखे शरदारम्भे चन्द्रकरैः शशाङ्ककिरणैरुपबृंहिता विकासं गमिताः सश्रीकाः अत एव विजृम्भमाणाः कुमुदाकरा इव श्वेतकमलसरांसीव सुतसोमस्य दर्शनादवलोकनादेव बन्धमोक्षाशया स्फुटहासकान्तयः समुदितमन्दस्मितास्ते नरेन्द्र-पुत्राः राजकुमाराः विरेजिरे शुशुभिरे। उपमालङ्कारः ॥९५॥

अथैनानभ्युपगम्य बोधिसत्त्वः समाश्वासयन्प्रियवचनपुरःसरं च प्रतिसम्मोद्य सौदासस्याद्रोहाय शपथं कारयित्वा बन्धनाद्विमुच्य सार्धं सौदासेन तैश्च नृपतिपुत्रैरनुगम्यमानः स्वं राज्यमुपेत्य यथार्हकृतसंस्कारां-स्तान्राजपुत्रान्सौदासं च स्वेषु स्वेषु राज्येषु प्रतिष्ठापयामास।

तदेवं श्रेयः समाधत्ते यथा तथाप्युपनतः सत्सङ्गम इति श्रेयोऽर्थिना सज्जनसमाश्रयेण भवितव्यम्। एवमसंस्तुतसुहृत्पूर्वं जन्मस्वप्युपकारपर-त्वाद्बुद्धो भगवानिति तथागतवर्णेऽपि वाच्यम्। एवं सद्धर्मश्रवणं दोषा-पचयाय गुणसमाधानाय च भवतीति सद्धर्मश्रवणेऽपि वाच्यम्। श्रुत-प्रशंसायामपि वाच्यम्। एवमनेकानुशंसं श्रुतमिति॥ सत्यकथायामपि वाच्यम्। एवं सज्जनेष्टं पुण्यकीर्त्याकरं सत्यवचनमित्येवं स्वप्राणसुखैश्व-र्यनिरपेक्षाः सत्यमनुरक्षन्ति सत्पुरुषा इति सत्यप्रशंसायामप्युपनेयं करु-णावर्णेऽपि चेति।

प्रतिसम्मोद्य अभिनन्द्य। अद्रोहाय अवैराय। तदेवमिति। पूर्वं व्याख्या-तमेतत्। असंस्तुतसुहृत् अकारणबान्धवः। तथागतवर्णे बोधिसत्त्वमाहात्म्ये। गुणसमाधानाय गुणसंग्रहाय। सद्धर्मश्रवणे धर्मकथाश्रवणे श्रुतं शास्त्रम्। अनेका-नुशंसं अनेकलाभप्रदम्। उपनेयं ज्ञेयं, करुणावर्णे प्राणिषु करुणायां चेति शिवम्॥

❀ इति सुतसोमजातकम् ❀



# टीकाकर्तृवंशप्रशस्तिः ।

आसीदसीमकमलाप्रणयैकपात्रं श्रीरेणुकाङ्घ्रिसरसीरुहचञ्चरीकः ।
श्रीदाक्षिणात्यधरणीसुरवंशभूषाचिन्तामणिर्जगति शङ्करपण्डितेन्द्रः ॥
काशीपुरीमधिवसन् शिवभक्तिशाली दानैरनन्तफलदैर्वसुधाऽमरेषु ।
यः स्वर्गिणामपि तथाद्भुतमातनोत्-न येनाऽनिमेषनयनाः खलु तेऽधुनाऽपि ॥

तस्याऽजायत वंशदुग्धजलधेरौदार्यधैर्यादिभिः–
तैस्तैः सद्गुणरश्मिभिः शिशिरयन् लोकेक्षणानि क्षितौ ।
श्रीमान् भैरवनायको गिरिसुतापादारविन्दस्खलत्–
पीयूषद्रवमाधुरीमधुकरः शान्तिक्षमासागरः ॥

श्रीमद्भैरवनायकात्मजनुषः सद्धर्मलक्ष्मीजुषो
नानादर्शनवेदिनः कविकुलालङ्कारचूडामणेः ।
श्रीनारायणशास्त्रिसद्गुरुवराल्लब्धात्मलाभोदयः
'खस्ते' वंशसमुद्भवः शिशुरयं वाग्देवतानुग्रहात् ॥

साध्वीकुलनमस्याया 'लक्ष्मी' रित्यभिधाजुषः ।
जनन्याः स्वर्गवासिन्याः प्रणतश्चरणाब्जयोः ॥

श्रीभालचन्द्रविदुषः स्वगुरोः प्रसादात्
पूताशयो बटुकनाथसुधीश्चकार ।
'बाला'ऽभिधामभिनवां विशदार्थतत्त्वां
व्याख्यां मितामिह मुदे पठतां शिशूनाम् ॥

अश्वाङ्कनन्दवसुधामितवैक्रमाब्दे
राकातिथौ इष इति प्रथिते च मासे ।
भूनन्दनस्य दिवसे सुषमान्वितेयं
व्याख्याऽर्प्यते चरणयोः परदेवतायाः ॥

इति खिस्तेश्रीबटुकनाथशास्त्रिविरचिता 'बाला'ऽऽख्या
जातकमालाव्याख्या सम्पूर्णतामयासीत् ।

## सन् १९४१

### जातकमालाया नियतभागे प्रश्नाः—

१—अथ ते यक्षा ब्राह्मणवर्णमात्मानमभिनिर्माय समनुचरन्तो ददृशुः प्रत्यरण्यचरमन्यतमं गोपालकं सशाद्वले छायाद्रुममूले सोपानत्कं संनिषण्णं सपल्लवैर्वनतरुकुसुमैर्विरचितां मालामुद्वहन्तं दक्षिणतो विन्यस्तदण्डपरशुमेकाकिनं रज्जुवर्त्तनव्यापृत प्रक्ष्वेडितविलासेन गायन्तमासीनं समुपेत्य चैनमूचुः । थथथददकाका काका । भो गवां संरक्षाधिकृत ! एवं विविक्ते निर्जनसम्पातेऽस्मिन्नरण्ये विचरन्नेवमेकाकी कथं न बिभेषीति ।

उपरिनिर्दिष्टो गद्यभागः सङ्गतिं प्रदर्श्य व्याख्येयः । ···१०

२—( क ) निमित्तमासाद्य यदेव किञ्चन स्वधर्ममार्गं विसृजन्ति बालिशाः ।
तपःश्रुतज्ञानधनास्तु साधवो न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ॥

( ख ) न जीवितं यत्सुखमैहिकं वा सत्याच्च्युतं रक्षति दुर्गतिभ्यः ।
सत्यं विजह्यादिति कस्तदर्थं यच्चाकरः स्वर्गयशःसुखानाम् ॥

अनयोरेकतरत् पद्य सन्दर्भप्रदर्शनपूर्वकं सम्यक् व्याख्येयम् ···५

## सन् १९४२

१—बिसजातकस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या । ···५

२—अथ तद्द्वीपनिवासिनः पुरुषाः यज्ञपशुनिमित्तं दुःशीलपुरुषान्वेषणादरं तमन्ववेक्ष्य राज्ञस्तां च घोषणामतिभीषणां प्रत्यहमुपशृण्वन्तः पापजनोपग्रहावहितांश्च राजपुरुषान् समन्ततः समापततोऽभिवीक्ष्य त्यक्तदौःशील्यानुरागा···वैरप्रसङ्गपराङ्मुखाः···संविभागविशारदाः···कृत इव युगे बभूवुः ।

सङ्गतिप्रदर्शनपूर्वकमुद्धृतो गद्यभागो व्याख्यायताम् ···१०

## सन् १९४३

१—"अथ स महात्मा महत्या करुणया समापीड्यमानहृदयस्तान् वाणिजकान् व्यवस्थापयन्नुवाच । अस्त्यत्रापि नः कश्चित् प्रतीकारविधिः प्रतिभाति ।··· अथ सुपारगो बोधिसत्त्व एकांसमुत्तरासङ्गं कृत्वा···सांयात्रिकानामन्त्रयते स्म" ।

किमामन्त्रयामासेति प्रतिपादयद्भिः स्वसंस्कृतेनेयं कथोपन्यस्यतां विस्तरेण । ···१२

